THE

# MADHYAMAVYÂYOGA, DÛTAVÂKYA, DÛTAGHAṬOTKACHA, KARṆABHÂRA AND ÛRUBHANGA

OF

## BHÂSA

EDITED WITH NOTES

BY

T GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM

**Bhasa's Works:—Nos. 6, 7, 8, 9 & 10.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

---

TRIVANDRUM.

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS,

1912.

---

अनन्तशयनसंस्कृतग्रन्थावलिः.

ग्रन्थाङ्कः २२.

# मध्यमव्यायोगः, दूतवाक्यं, दूतघटोत्कचं, कर्णभारम्, ऊरुभङ्गम्

इत्येतानि

## महाकविश्रीभासप्रणीतानि

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितानि

लघुटिप्पण्या च संयोजितानि ।

भासनाटकचक्रे षष्ठसप्तमाष्टमनवमदशमानि ।

तानि च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितानि ।

कोल्लम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१२.

# PREFACE.

This volume contains the following five plays, (1) Madhyama-vyâyoga, (2) Dûtavâkya, (3) Dûtaghaṭotkacha, (4) Karṇabhâra and (5) Ûrubhanga, each of which consists of a single Act. In the first of these plays, Bhîmasena is represented as rescuing a brahmin family from the hands of Ghaṭotkacha, in the second, Srîkrishṇa acting the part of a messenger on behalf of the Pâṇḍavas to the court of Duryodhana, in the third, Ghaṭotkacha instigated by Srîkrishṇa who became indignant at the murder of Abhimanyu serving as a messenger to Duryodhana's party, in the fourth, Karṇa bestowing on Indra Kavacha and Kuṇḍala as boon, and in the last, Bhîmasena smashing Duryodhana's thighs in the fight with gadas.

In the introduction to Swapnavâsavadatta, reference was made to the fragment of a play with no name. It is now learnt to be 'Dûtavâkya', a complete copy (a worn out manuscript marked ख) of the same with colophon, 'दूतवाक्यं समाप्तम्' subsequently being obtained from Mr. Subrahmanyan Moottatu of Harippad. The same manuscript contains also a complete copy (marked ख) of the play, Karṇabhâra with the aid of which the portions lost at the beginning and at the end of the copy क of the same were inserted. If the title Karṇabhâra i. e. responsibility of Karṇa as a commander is to be significant it seems probable that the play can have at least one Act more to describe the feats of Karṇa.

Of these plays, Dûtavâkya alone contains no Prakrit dialects.

While Sanskrit dramas invariably end like comedies, the play, Ûrubhanga winds up with a tragic scene and Dûtaghaṭotkacha with neither.

TRIVANDRUM. T. GAṆAPATI SÂSTRÎ.

# निवेदना ।

---

१. मध्यमव्यायोगः, २. दूतवाक्यम्, ३. दूतघटोत्कचम्, ४. कर्णभारम्, ५. ऊरुभङ्गम्, इति पञ्च रूपकाणि एकाङ्कात्मकानि अस्मिन् पुस्तके क्रमेण सन्निवेशितानि ।

मध्यमव्यायोगे भीमसेनेन ब्राह्मणकुटुम्बस्य घटोत्कचात् परित्राणं, दूतवाक्ये श्रीकृष्णेन पाण्डवार्थे दुर्योधनसभायां दूत्यकरणं, दूतघटोत्कचेऽभिमन्युवधकुपितश्रीकृष्णचोदितस्य घटोत्कचस्य दुर्योधनपक्षे दूतकर्मकरणं, कर्णभारे कर्णस्य शक्राय कवचकुण्डलार्पणम्, ऊरुभङ्गे भीमेन गदायुद्धे दुर्योधनोरुभञ्जनं च प्रतिपाद्यं वस्तु ।

यत्तदनवगतनामकं किञ्चिदुपक्रान्तविच्छिन्नं रूपकं स्वप्नवासवदत्तोपोद्घाते निर्दिष्टं, कृष्णतन्त्रिसकाशाधिगतेऽप्यादर्शे तथाविधमेव दृष्टं, तदेव नाम्ना 'दूतवाक्यम्' इति पश्चादवगतम् । तस्य हि समग्रं शरीरं पुत्तियल् सुब्रह्मण्यमूत्तुसकाशोपलब्धे जीर्णतालपत्रसम्पुटे ख.संज्ञे स्थितं, नाम च ग्रन्थान्ते 'दूतवाक्यं समाप्तम्' इति लिखितं दृष्टम् । तत्रैव च तालपत्रसम्पुटे कर्णभारस्याप्येकं प्रतिरूपान्तरमुपलब्ध ख.सञ्ज्ञं, यद्वशात् कर्णभारादर्शस्य क.संज्ञस्याद्यन्तांशवैकल्यं परिहर्तुं पारितम् । इदं त्वत्र प्रतिभाति—'कर्णभार'-संज्ञास्वरसात् कर्णस्य भारः सैनापत्यनिर्वाहोऽत्र प्राधान्येन प्रतिपाद्यः प्रतीयते । तेन कर्णपराक्रमणप्रकारशंसी उत्तराङ्कोऽप्यस्य संभाव्यत इति ।

एषु दूतवाक्ये प्राकृतव्यवहारो न विद्यते ।

उपलभ्यमानेषु संस्कृतरूपकेषु सर्वेषु कथावस्तुनः शुभावसानत्वमव्यभिचरितमित्येष लोकविदितोऽर्थः । ऊरुभङ्गे तु तस्य दुःखान्तत्वं, दूतघटोत्कचे चानुभयावसानत्व दृश्यत इति विशेषो वर्तते ।

अनन्तशयनम् .                                                    त . गणपतिशास्त्री .

॥ श्रीः ॥

श्रीगणेशायनमः ।

महाकविश्रीभासप्रणीतः

# मध्यमव्यायोगः ।

(ततः प्रविशति सूत्रधारः)

**सूत्रधारः** —

पायात् स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखड्गनीलः ।
यः प्रोद्यतस्त्रिभुवनैकमणे रराज
वैदूर्यसङ्क्रम इवाम्बरसागरस्य ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

(नेपथ्ये)

भोस्तात ! कोनुखल्वेषः ।

**सूत्रधारः** — भवतु, विज्ञातम् ।

भोःशब्दोच्चारणादस्य ब्राह्मणोऽयं न संशयः ।
त्रास्यते निर्विशङ्केन (केन)चित् पापचेतसा ॥ २ ॥

(नेपथ्ये)

भोस्तात! कोनुखल्वेषः ।

**सूत्रधारः**—हन्त दृढं विज्ञातम्। एष खलु पाण्डवमध्यमस्यात्मजो हिडिम्बारणिसम्भूतो राक्षसा(नि?ग्नि)रकृतवैरं ब्राह्मणजनं वित्रासयति । भोः! कष्टं कष्टं खलु पत्नीसुतपरिवृतस्य ब्राह्मणस्य वृत्तान्तः । अत्र हि,

> श्रान्तैः सुतैः परिवृतस्तरुणैः सदारो
> वृद्धो द्विजो निशिचरानुचरः स एषः ।
> व्याघ्रानुसारचरितो वृषभः सधेनुः
> सन्त्रस्तवत्स(क) इवाकुलतामुपैति ॥ ३ ॥

(निष्क्रान्त.)

स्थापना ।

---

(ततः प्रविशति सुतत्रयकलत्रपरिवृतः केशवदासः पृष्ठतो घटोत्कचश्च)

**वृद्धः**—भोः! कोनुखल्वेषः,

> (त? अ)रुणरविकरप्रकीर्णकेशो
> भ्रुकुटिपुटोज्ज्वलपिङ्गलायताक्षः ।
> सतडिदिव घनः सकण्ठसूत्रो
> †युगनिधने प्रतिमाकृतिर्हरस्य ॥ ४ ॥

---

† युगनिधने युगसंहारे प्रवृत्तस्येति शेषः ।

**प्रथमः** — भोस्तात! कोनुखल्वेषः ।

ग्रह(नि?यु)गलनिभाक्षः पीनविस्तीर्णवक्षाः
कनककपिशकेशः पीतकौशेयवासाः ।
तिमिरनिवहवर्णः पाण्डरोद्वृत्तदंष्ट्रो
नव इव ‡जलगर्भो लीयमानेन्दुलेखः ॥ ५ ॥

**द्वितीयः** — क एष भोः!

कलभदशनदंष्ट्रो लाङ्गलाकारनासः
करिवरकरबाहुर्नीलजीमूतवर्णः ।
हुतहुतवहदीप्तो यः स्थितो भाति भीम-
स्त्रिपुरपुरनिहन्तुः शङ्करस्येव रोषः ॥ ६ ॥

**तृतीयः** — भोस्तात! कोनुखल्वस्मान् पीडयति ।

वज्रपातोऽचलेन्द्राणां श्येनः सर्वपतत्रिणाम् ।
मृगेन्द्रो मृगसङ्घानां मृत्युः पुरुषविग्रहः ॥ ७ ॥

**ब्राह्मणी** — (क) अय्य! को एसो अह्माअं सन्दावेइ ।

**घटोत्कचः** — भो ब्राह्मण! तिष्ठ तिष्ठ ।

किं यासि मद्भयविनाशितधैर्यसारो
वित्रस्तदारसुतरक्षणहीनशक्ते! ।

---

(क) आर्य! क एषोऽस्मान् सन्तापयति ।

---

‡ जलगर्भो मेघः ।

ताक्ष्याग्रपक्षपवनोद्धतरोषवह्नि-
तीव्रः कलत्रसहितो भुजगो यथार्तः ॥ ८ ॥

भो ब्राह्मण! न गन्तव्यं न गन्तव्यम् ।

वृद्धः — ब्राह्मणि! न भेतव्यम् । पुत्रकाः! न भेतव्यम् । सविमर्शा ह्यस्य वाणी ।

घटोत्कचः — भोः! कष्टम् ।

जानामि सर्वत्र सदा च नाम
द्विजोत्तमाः पूज्यतमाः पृथिव्याम् ।
अकार्यमेतच्च मयाद्य कार्यं
मातुर्नियोगादपनीतशङ्कम् ॥ ९ ॥

वृद्धः — ब्राह्मणि! किं न स्मरसि तत्रभवता जलक्लिन्नेन मुनिनोक्तम् — अनपेतराक्षसमिदं वनमप्रमादेन गन्तव्यमिति । तदेतदुत्पन्नं भयम् ।

ब्राह्मणी — (क) किं दाणि अय्यो मज्झत्थवण्णो* विअ दिस्सदि ।

वृद्धः — किं करिष्यामि मन्दभाग्यः ।

(क) किमिदानीमार्यो मध्यस्थवर्ण इव दृश्यते ।

* मध्यस्थवर्ण इव क्षत्रिय इव ।

**ब्राह्मणी**—(क) णं विक्कोसामो ।

**प्रथमः**—भवति ! कस्य वयं विक्रोशामः ।

इदं हि शून्यं तिमिरोत्करप्रभै-
नैगप्रकारैरवरुद्धदिक्पथम् ।
खगैर्मृगैश्चापि समाकुलान्तरं
वनं निवासाभिमतं मनस्विनाम् ॥ १० ॥

**वृद्धः**—ब्राह्मणि ! न भेतव्यं न भेतव्यम् । मनस्वि-जननिवासयोग्यमिति श्रुत्वा विगत इव मे सन्त्रासः । शङ्के नात्रातिदूरेण पाण्डवाश्रमेण भवितव्यम् । पाण्डवास्तु,

युद्धप्रियाश्च शरणागतवत्सलाश्च
दीनेषु पक्षपतिताः कृतसाहसाश्च ।
एवंविधप्रतिभयाकृतिचेष्टितानां
दण्डं यथार्हमिह धारयितुं समर्थाः ॥ ११ ॥

**प्रथमः**—भोस्तात ! न तत्र पाण्डवा इति मन्ये ।

**वृद्धः**—पुत्र ! कथं त्वं जानीषे ।

**प्रथमः**—तस्मादाश्रमादागतेन केनचिद् ब्राह्मणेन (कथितं)—शतकुम्भं नाम यज्ञमनुभवितुं महर्षेर्धौम्यस्याश्रमं गता इति ।

---

(क) ननु विक्रोशामः ।

**वृद्धः**—हन्त हताः स्मः ।

**प्रथमः**—तात ! न तु सर्वे एव । आश्रमपरिपालनार्थमिह स्थापितः किल मध्यमः ।

**वृद्धः**—यद्येवं, सन्निहिताः सर्वे एव पाण्डवाः ।

**प्रथमः**—स चाप्यस्यां वेलायां व्यायामपरिचयार्थं वि(प्र)-कृष्टदेश इति श्रूयते ।

**वृद्धः**—हन्त निराशाः स्मः । भवतु, पुत्र ! व्यपश्रयिष्ये तावदेनम् ।

**प्रथमः**—अलमलं परिश्रमेण ।

**वृद्धः**—पुत्रं(निर्वेदप्यर्थिनी ?) खलु प्रार्थना । भवतु, पश्यामस्तावत् । भोः पुरुष ! अस्त्यस्माकं मोक्षः ।

**घटोत्कचः**—मोक्षोऽस्ति समयतः ।

**वृद्धः**—कः समयः ।

**घटोत्कचः**—अस्ति मे तत्रभवती जननी । तयाहमाज्ञप्तः—पुत्र ! ममोपवासनिसर्गार्थमस्मिन् वनप्रदेशे कश्चिन्मानुषः परिमृग्यानेतव्य इति । ततो मयासादितो भवान् ।

पत्न्या चारित्रशालिन्या द्विपुत्रो मोक्षमिच्छसि ।
बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥ १२ ॥

**वृद्धः**——हं भो राक्षसापशद !

किमहं श्रुतवान् वृद्धः पुत्रं शीलगुणान्वितम् ।
पुरुषादस्य दत्त्वा हा कथं निर्वृतिमाप्नुयाम् ॥ १३ ॥

**घटोत्कचः**——

यद्यर्थितो द्विजश्रेष्ठ ! पुत्रमेकं न मुञ्चसि ।
सकुटुम्बः क्षणेनैव विनाशमुपयास्यसि ॥ १४ ॥

**वृद्धः**——एष एव मे निश्चयः ।

कृतकृत्यं शरीरं मे परिणामेन जर्जरम् ।
राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥ १५ ॥

**ब्राह्मणी**——(क) अय्य ! मा मा एवं । पदिमत्तधम्मिणी पदिव्वदत्ति णाम । गहीदफळेण एदिणा सरीरेण अय्यं कुळं च रक्खिदुं इच्छामि ।

**घटोत्कचः**——न खलु स्त्रीजनोऽभिमतस्तत्रभवत्या ।

**वृद्धः**——अहमनुगमिष्यामि भवन्तम् ।

**घटोत्कचः**——आ वृद्धस्त्वमपसर ।

**प्रथमः**——भोस्तात ! ब्रवीमि खलु तावत् किञ्चित् ।

---

(क) आर्य ! मा मैवम् । पतिमात्रधर्मिणी पतिव्रतेति नाम । गृहीतफलेनैतेन शरीरेणार्यं कुलं च रक्षितुमिच्छामि ।

**वृद्धः**—पुत्र कथय ।

**प्रथमः**—

मम प्राणैर्गुरुप्राणानिच्छामि परिरक्षितुम् ।
रक्षणार्थं कुलस्यास्य मोक्तुमर्हति मां भवान् ॥ १६ ॥

**द्वितीयः**—आर्य ! मा मैवम् ।

ज्येष्ठः श्रेष्ठः कुले लोके पितॄणां च सुसम्प्रियः ।
ततोऽहमेव यास्यामि गुरुवृत्तिमनुस्मर ॥ १७ ॥

**तृतीयः**—आर्यौ ! मा मैवम् ।

ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः ।
ततोऽहं कर्तुमस्म्यर्हो गुरूणां प्राणरक्षणम् ॥ १८ ॥

**प्रथमः**—वत्स ! मा मैवम् ।

आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तार्यते ।
ततोऽहमेव यास्यामि गुरूणां प्राणरक्षणात् ॥ १९ ॥

**वृद्धः**—ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम् ।

**ब्राह्मणी**—(क) जह अय्यो जेट्ठमिच्छदि, तह अहं पि कणिट्ठं इच्छामि ।

**द्वितीयः**—पित्रोरनिष्टः कस्येदानीं प्रियः ।

---

(क) यथार्यो ज्येष्ठमिच्छति, तथाहमपि कनिष्ठमिच्छामि ।

**घटोत्कचः**—अहं प्रीतोऽस्मि, शीघ्रमागच्छ ।

**द्वितीयः**—

धन्योऽस्मि यद् गुरुप्राणाः स्वैः प्राणैः परिरक्षिताः ।
बन्धुस्नेहाद्धि महतः कालस्नेहस्तु दुर्लभः ॥ २० ॥

**घटोत्कचः**—अहो स्वजनवात्सल्यमस्य ब्राह्मणवटोः ।

**द्वितीयः**—भोस्तात! अभिवादये ।

**वृद्धः**—एह्येहि पुत्र!

विनिमाय गुरुप्राणान् स्वैः प्राणैर्गुरुवत्सल! ।
अकृतात्मदुरावापं ब्रह्मलोकमवाप्नुहि ॥ २१ ॥

**द्वितीयः**—अनुगृहीतोऽस्मि । अम्ब! अभिवादये ।

**ब्राह्मणी**—(क) जाद! चिरं जीव ।

**द्वितीयः**—अनुगृहीतोऽस्मि । आर्य! अभिवादये ।

**प्रथमः**—एह्येहि वत्स!

परिष्वजस्व गाढं मां परिष्वक्तः शुभैर्गुणैः ।
कीर्त्या तव परिष्वक्ता भविष्यति वसुन्धरा ॥ २२ ॥

**द्वितीयः**—अनुगृहीतोऽस्मि ।

**तृतीयः**—आर्य! अभिवादये ।

---

(क) जात! चिरं जीव ।

द्वितीयः—स्वस्ति ।

तृतीयः—अनुगृहीतोऽस्मि ।

द्वितीयः—भोः पुरुष ! ब्रवीमि किञ्चित् ।

घटोत्कचः—ब्रूहि ब्रूहि शीघ्रम् ।

द्वितीयः—एतस्मिन् वनान्तरे जलाशय इव दृश्य
मे प्रकल्पितपरलोकस्य पिपासाप्रतीकारं करिष्यामि ।

घटोत्कचः—दृढव्यवसायिन् ! गम्यताम् । अ
मातुराहारकालः । शीघ्रमागच्छ ।

द्वितीयः—भोस्तात ! एष गच्छामि । (निष्क्रान्तः)

वृद्धः—हा हा परिमुषिताः स्मो भोः ! परिमुषित

यस्त्रिश्रृङ्गो मम त्वासीन्मनोज्ञो वंशपर्वतः ।
स मध्यश्रृङ्गभङ्गेन मनस्तपति मे भृशम् ॥ २

हा पुत्र ! । कथं गत एव ।

तरुण ! तरुणतानुरूपकान्ते !
नियमपराध्ययनप्रसक्तबुद्धे ! ।
कथमिह गजराजदन्त(म?भ)म-
स्तरुरिव यास्यसि पुष्पितो विनाशम् ॥ २

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः । अ

मातुराहारकालः । किन्नुखलु करिष्ये । भवतु दृष्टम् । भो ब्राह्मण ! आहूयतां तव पुत्रः ।

**वृद्धः** — अतिराक्षसं खलु ते वचनम् ।

**घटोत्कचः** — कथं रुष्यति, मर्षयतु मर्षयतु भवान् । अयं मे प्रकृतिदोषः । अथ किन्नामा तव पुत्रः ।

**वृद्धः** — एतदपि न शक्यं श्रोतुम् ।

**घटोत्कचः** — युक्तं भोः! । ब्राह्मणकुमार ! किन्नामा ते भ्राता ।

**प्रथमः** — तपस्वी मध्यमः ।

**घटोत्कचः** — मध्यम इति सदृशमस्य । अहमेव यास्यामि । भो भो मध्यम ! मध्यम ! शीघ्रमागच्छ ।

(ततः प्रविशति भीमसेनः)

**भीमसेनः** — भोः ! कस्यायं स्वरः ।

खगशतविरुते विरौति तारं
द्रुमगहने दृढसङ्कटे वनेऽस्मिन् ।
जनयति च मनोज्वरं स्वरोऽयं
बहुसदृशो हि धनञ्जय(स्वर)स्य ॥ २५ ॥

**घटोत्कचः** — चिरायते खलु ब्राह्मणवटुः । अतिक्रामति मातुराहारकालः । किन्नुखलु करिष्ये । भवतु दृष्टम् । उच्चैः

शब्दापयामि । भो मध्यम! शीघ्रमागच्छ ।

भीमसेनः—भोः! कोनुखल्वेतस्मिन् वनान्तरे मम व्यायामविघ्नमुत्पाद्य मध्यम! मध्यम! इति मां शब्दापयति । भवतु, पश्यामस्तावत् । (परिक्रम्यावलोक्य) अहो दर्शनीयोऽयं पुरुषः । अयं हि,

सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो
बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीर्घविश्लिष्टकेशः ।
§व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः
सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः ॥ २६ ॥

घटोत्कचः—चिरायते खलु ब्राह्मणवटुः । अतिक्रामति मातुराहारकालः । किमिदानीं करिष्ये । भवतु, उच्चैराह्वानं करिष्ये । भो भो मध्यम! शीघ्रमागच्छ ।

भीमसेनः—भोः प्राप्तोऽस्मि ।

घटोत्कचः—न खल्वयं ब्राह्मणवटुः । अहो दर्शनीयोऽयं पुरुषः । य एषः,

सिंहाकृतिः कनकतालसमानबाहु-
र्मध्ये तनुर्गरुडपक्षविलिप्तपक्षः ।
विष्णुर्भवेद् विकसिताम्बुजपत्रनेत्रो
नेत्रे ममाहरति बन्धुरिवागतोऽयम् ॥२७॥

---

§ 'उरः प्रभृतिभ्य कप्' (५-४-१५१) इति नित्योऽपि कबिह न कृतः ।

भो मध्यम! त्वां खल्वहं शब्दापयामि ।

**भीमसेनः**—अतः खल्वहं प्राप्तः ।

**घटोत्कचः**—किं भवानपि मध्यमः ।

**भीमसेनः**—न तावदपरः ।

मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः ।
मध्यमोऽहं क्षितेर्भद्र! भ्रातृणामपि मध्यमः ॥ २८ ॥

**घटोत्कचः**—भवितव्यम् ।

**भीमसेनः**—अपिच,

मध्यमः पञ्चभूतानां पार्थिवानां च मध्यमः ।
भवे च मध्यमो लोके सर्वकार्येषु मध्यमः ॥ २९ ॥

**वृद्धः**—

‡मध्यमस्त्विति सम्प्रोक्ते नूनं पाण्डवमध्यमः ।
अस्मान् मोक्तुमिहायातो दर्पान्मृत्योरिवोत्थितः ॥ ३० ॥

(प्रविश्य)

**मध्यमः**—

अस्यामाचम्य पद्मिन्यां परलोकेषु दुर्लभम् ।
आत्मनैवात्मनो दत्तं पद्मपत्रोज्ज्वलं जलम् ॥ ३१ ॥

(उपगम्य) भोः पुरुष! प्राप्तोऽस्मि ।

‡ 'भो मध्यमे'ति पठनीयं भाति ।

**घटोत्कचः**—प्राप्तवानिदानीं खल्वसि । मध्यम! मध्यम! इत इतः ।

**वृद्धः**—(भीममुपगम्य) भो मध्यम! परित्रायस्व ब्राह्मणकुलम् ।

**भीमसेनः**—न भेतव्यं न भेतव्यम् । मध्यमोऽहमभिवादये ।

**वृद्धः**—वायुरिव दीर्घायुर्भव ।

**भीमसेनः**—अनुगृहीतोऽस्मि । कुतो भयमार्यस्य ।

**वृद्धः**—श्रूयताम् । अहं खलु कुरुराजेन युधिष्ठिरेणाधिष्ठितपूर्वे कुरुजाङ्गले यूपग्रामवास्तव्यो माठरसगोत्रश्च कल्पशाखाध्वर्युः केशवदासो नाम ब्राह्मणः । तस्य ममोत्तरस्यां दिश्युद्यामकग्रामवासी मातुलः कौशिकसगोत्रो यज्ञबन्धुर्नामास्ति । तस्य पुत्रोपनयनानुभवनार्थं सकलत्रोऽस्मि प्रस्थितः ।

**भीमसेनः**—अरिष्टोऽस्तु पन्थाः । ततस्ततः ।

**वृद्धः**—ततो मामेव हि,

सजलजलदगात्रः पद्मपत्रायताक्षो<br>
मृगपतिगतिलीलो राक्षसः प्रोग्रदंष्ट्रः ।<br>
जगति विगतशङ्कस्त्वद्विधानां समक्षं<br>
ससुतपरिजनं भो! हन्तुकामोऽभ्युपैति ॥ ३२ ॥

**भीमसेनः**—एवम्, अनेन ब्राह्मणजनस्य मार्गविघ्नः कृतः। भवतु, निग्रहीष्यामि तावदेनम्। भोः पुरुष! तिष्ठ तिष्ठ।

**घटोत्कचः**—एष स्थितोऽस्मि ।

**भीमसेनः**—किमर्थं ब्राह्मणं प(र?रा)स्यसि† ।

पुत्रनक्षत्रकीर्णस्य पत्नीकान्तप्रभस्य च ।
वृद्धस्य विप्रचन्द्रस्य भवान् राहुरिवागतः ॥ ३३ ॥

**घटोत्कचः**— अथकिम् । राहुरेव ।

**भीमसेनः**— आः,

निवृत्तव्यवहारोऽयं सदारस्तनयैः सह ।
सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः ॥ ३४ ॥

**घटोत्कचः**—न मुच्यते ।

**भीमसेनः**—(आत्मगतम्) भोः! कस्य पुत्रेणानेन भवितव्यम्।

भ्रातॄणां मम सर्वेषां कोऽयं भो! गुणतस्करः ।
दृष्ट्वैतद् बालशौण्डीर्यं सौभद्रस्य स्मराम्यहम् ॥ ३५॥

(प्रकाशम्) भोः पुरुष! मुच्यताम् ।

**घटोत्कचः**—न मुच्यते ।

---

† परास्यसि निरस्यसीत्यर्थः ।

मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता ।
न मुच्यते तथाह्येष गृहीतो मातुराज्ञया ॥ ३६ ॥

**भीमसेनः**—(आत्मगतम्) कथं मातुराज्ञेति । अहो गुरुशुश्रूषुः खल्वयं तपस्वी ।

माता किल मनुष्याणां दैवतानां च दैवतम् ।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः ॥ ३७ ॥

(प्रकाशम्) भोः पुरुष ! प्रष्टव्यं खलु तावदस्ति ।

**घटोत्कचः**—ब्रूहि ब्रूहि शीघ्रम् ।

**भीमसेनः**—का नाम भवतो माता ।

**घटोत्कचः**—हिडिम्बा नाम राक्षसी ।

कौरव्यकुलदीपेन पाण्डवेन महात्मना ।
सनाथा या महाभागा पूर्णेन द्यौरिवात्मना* ॥ ३८ ॥

**भीमसेनः**—(आत्मगतम्) एवं, हिडिम्बायाः पुत्रोऽयम् । सदृशो ह्यस्य गर्वः ।

रूपं सत्त्वं बलं चैव पितृभिः सदृशं बहु ।
प्रजासु वीतकारुण्यं मनश्चैवास्य कीदृशम् ॥ ३९ ॥

(प्रकाशम्) भोः पुरुष ! मुच्यताम् ।

**घटोत्कचः**—न मुच्यते ।

---

* आत्मना चन्द्रेण । 'आत्मार्कचन्द्रवातासिर्जीवेषु परमात्मनि' इति केशवस्वामी ।

**भीमसेनः**—भो ब्राह्मण ! गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः ।

**द्वितीयः**—मा मा भवानेवम् ।

त्यक्ताः प्रागेव मे प्राणा गुरुप्राणेष्वपेक्षया ।
युवा रूपगुणोपेतो भवांस्तिष्ठतु भूतले ॥ ४० ॥

**भीमसेनः**—आर्य ! मा मैवम् । क्षत्रियकुलोत्पन्नोऽहम् । पूज्यतमः खलु ब्राह्मणः । तस्मान्मच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

**घटोत्कचः**—एवं, क्षत्रियोऽयम् । तेन गर्वः । भवतु, इममेव हत्वा नेष्यामि । अथ केनायं वारितः ।

**भीमसेनः**—मया ।

**घटोत्कचः**—किं त्वया ।

**भीमसेनः**—अथकिम् ।

**घटोत्कचः**—तेन हि भवानेवागच्छतु ।

**भीमसेनः**—एवम्, अतिवीर्यबलं नानुगच्छामि । यदि ते शक्तिरस्ति, बलात्कारेण मां नय ।

**घटोत्कचः**—किं मां प्रत्यभिजानीते भवान् ।

**भीमसेनः**—मत्पुत्र इति जाने ।

घटोत्कचः — कथं कथं तव पुत्रोऽहम् ।

भीमसेनः — कथं रुष्यति, मर्षयतु मर्षयतु भवान् । सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते । अत एव मयाभिहितम् ।

घटोत्कचः — भीतानामायुधं गृहीतम् ।

भीमसेनः —

शपामि सत्येन भयं न जाने
ज्ञातुं तदिच्छामि भवत्समीपे ।
किंरूपमेतद् वद भद्र! (तस्य)
गुणागुणज्ञः सदृशं प्रपत्स्ये ॥ ४१ ॥

घटोत्कचः — एष ते भयमुपदिशामि, गृह्यतामायुधम् ।

भीमसेनः — आयुधमिति । गृहीतमेतत् ।

घटोत्कचः — कथमिव ।

भीमसेनः —

काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः ।
अयं तु दक्षिणो बाहुरायुधं सदृशं मम ॥ ४२ ॥

घटोत्कचः — इदमुपपन्नं पितुर्मे भीमसेनस्य ।

भीमसेनः — अथ कोऽयं भीमो नाम ।

विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः ।
एतेषु कथ्यतां भद्र! केन ते सदृशः पिता ॥ ४३ ॥

**घटोत्कचः** —सर्वैः ।

**भीमसेनः** —धिगनृतमेतत् ।

**घटोत्कचः** —कथं कथम् । अनृतमित्याह । क्षिपसि मे गुरुम् । भवतु, इमं स्थूलं वृक्षमुत्पाट्य प्रहरामि । कथमनेनापि न शक्यते हन्तुम् । किन्नुखलु करिष्ये । भवतु, दृष्टम् । एतद् गिरिकूटमुत्पाट्य प्रहरामि ।

शैलकूटं मया क्षिप्तं प्राणानादाय यास्यति

**भीमसेनः** —

रुष्टोऽपि कुञ्जरो वन्यो न व्याघ्रं धर्षयेद् वने ॥ ४४ ॥

**घटोत्कचः** —कथमनेनापि न शक्यते हन्तुम् । किन्नुखलु करिष्ये । भवतु, दृष्टम् ।

नन्वहं भीमसेनस्य पुत्रः पौत्रो नभस्वतः
तिष्ठेदानीं सुसन्नद्धो नियुद्धे नास्ति मत्समः ॥ ४५ ॥

(इत्युभौ नियुद्ध कुरुतः)

**घटोत्कचः** — (भीमसेन बद्ध्वा)

व्रजसि कथमिह त्वं वीर्यमुल्लङ्घ्य बाह्वो-
र्गज इव दृढपाशैः पीडितो मद्भुजाभ्याम् ।

भीमसेनः — (आत्मगतम्) कथं गृहीतोऽस्म्यनेन । भोः सुयोधन! वर्धते खलु शत्रुपक्षः । कृतरक्षो भव । (प्रकाशम्) भोः पुरुष! अवहितो भव ।

घटोत्कचः — अवहितोऽस्मि ।

भीमसेनः — (नियुद्धबन्धमवधूय)

व्यपनय बलदर्पं दृष्टसारोऽसि वीर!
न हि मम परिखेदो विद्यते बाहुयुद्धे ॥ ४६ ॥

घटोत्कचः — कथमनेनापि न शक्यते हन्तुम् । किन्नुखलु करिष्ये । भवतु, दृष्टम् । अस्ति मातृप्रसादलब्धो मायापाशः । तेन बद्ध्वैनं नेष्यामि । कुतः खल्वापः । भो गिरे! आपस्तावत् । हन्त स्रवति । (आचम्य मन्त्रं जपति) भोः पुरुष!

मायापाशेन बद्धस्त्वं विवशो न गमिष्यसि ।
गजसे रज्जुभिर्बद्धः शक्रध्वज इवोत्सवे ॥ ४७ ॥

(इति मायया बध्नाति)

भीमसेनः — कथं मायापाशेन बद्धोऽस्मि । किमिदानीं करिष्ये । अस्ति महेश्वरप्रसादलब्धो मायापाशमोक्षो मन्त्रः । तं जपामि । कुतः खल्वापः । भवतु, भो ब्राह्मणकुमार! आनय कमण्डलुगता अपः ।

वृद्धः — इमा आपः ।

(भीमसेन आचम्य मन्त्र जप्त्वा मायां मोचयति)

**घटोत्कचः**— अये पतितः पाशः । किमिदानीं करिष्ये । भवतु, भोः पुरुष ! पूर्वसमयं स्मर ।

**भीमसेनः**— समय इति । एष स्मरामि । गच्छाग्रतः ।

(उभौ परिक्रामतः)

**वृद्धः**— पुत्रकाः ! किं कुर्मः । अयं गच्छति वृकोदरः ।

आक्रम्य राक्षसमिमं ज्वलदुग्ररूप-<br>
मुग्रेण बाहुबलवीर्यगुणेन युक्तम् ।<br>
एष प्रयाति शनकैरवधूय शीघ्र-<br>
मासारवर्षमिव गोवृषभः सलीलः ॥ ४८ ॥

**घटोत्कचः**— इह तिष्ठ । त्वदागमनमम्बायै निवेदयामि ।

**भीमसेनः**— बाढम् । गच्छ ।

**घटोत्कचः**— (उपसृत्य) अम्ब ! अभिवादये घटोत्कचोऽहम् । चिराभिलषितो भवत्या आहारार्थमानीतो मानुषः ।

(प्रविश्य)

**हिडिम्बा**— (क) जाद ! चिरं जीव । कीदिसो माणुसो आणीदो ।

---

(क) जात ! चिरं जीव । कीदृशो मानुष आनीतः ।

घटोत्कचः — भवति! वाङ्मात्रेण मानुषो, न वीर्येण ।

हिडिम्बा — (क) किं बह्मणो ।

घटोत्कचः — न ब्राह्मणः ।

हिडिम्बा — (ख) आदु थेरो ।

घटोत्कचः — न वृद्धः ।

हिडिम्बा — (ग) किं बाळो ।

घटोत्कचः — न बालः ।

हिडिम्बा — (घ) जइ एव्वं, पेक्खामि दाव णं ।

(उभौ परिक्रामतः)

हिडिम्बा — (ङ) किं एसो माणुसो आणीदो ।

घटोत्कचः — भवति! कोऽयम् ।

हिडिम्बा — (च) उम्मत्तअ! दव्वदं खु अअं ।

---

(क) किं ब्राह्मणः ।

(ख) अथवा स्थविरः ।

(ग) किं बालः ।

(घ) यद्येवं, पश्यामि तावदेनम् ।

(ङ) किमेष मानुष आनीतः ।

(च) उन्मत्तक! दैवतं खल्वयम् ।

**घटोत्कचः**—आः कस्य दैवतम् ।

**हिडिम्बा**—(क) तव अ मम अ ।

**घटोत्कचः**—कः प्रत्ययः ।

**हिडिम्बा**—(ख) एसो पच्चओ । जेदु अय्यउत्तो ।

**भीमसेनः**—(विलोक्य) का पुनरियम् । अये देवी हिडिम्बा ।

अस्माकं भ्रष्टराज्यानां भ्रमतां गहने वने ।
जातकारुण्यया देवि! सन्तापो नाशितस्त्वया ॥ ४९ ॥

हिडिम्बे! किमिदम् ।

**हिडिम्बा**—(कर्णे) (ग) ईदिसं विअ ।

**भीमसेनः**—जात्या राक्षसी, न समुदाचारेण ।

**हिडिम्बा**—(घ) उम्मत्तअ! अभिवादेहि पिदरं ।

**घटोत्कचः**—भोस्तात! अहं स धार्तराष्ट्रवनदवाग्निर्घटोत्कचोऽभिवादये । पुत्रचापलं क्षन्तुमर्हसि ।

---

(क) तव च मम च ।

(ख) एष प्रत्ययः । जयत्वार्यपुत्रः ।

(ग) ईदृशमिव ।

(घ) उन्मत्तक! अभिवादय पितरम् ।

**भीमसेनः** — एह्येहि पुत्र! व्यतिक्रमकृतं कान्तमेव । (इति परिष्वज्य) धार्तराष्ट्रवनदवाग्निपुत्रापेक्षीणि पितृहृदयानि । पुत्र! अतिबलपराक्रमो भव ।

**घटोत्कचः** — अनुगृहीतोऽस्मि ।

**वृद्धः** — एवं, भीमसेनपुत्रोऽयं घटोत्कचः ।

**भीमसेनः** — पुत्र! अभिवादयात्रभवन्तं केशवदासम् ।

**घटोत्कचः** — भगवन्! अभिवादये ।

**वृद्धः** — पितृसदृशगुणकीर्तिर्भव ।

**घटोत्कचः** — अनुगृहीतोऽस्मि ।

**वृद्धः** — भो वृकोदर! रक्षितमस्मत्कुलं, स्वकुलमुद्धृतं च। गच्छामस्तावत् ।

**भीमसेनः** —

अनुग्रहात् तु भवतः सर्वमासीदिदं शुभम् ।
आश्रमोऽदूरतोऽस्माकं तत्र विश्रम्य गम्यताम् ॥ ५० ॥

**वृद्धः** — कृतमातिथ्यमनेन जीवितप्रदानेन । तस्माद्गच्छामस्तावत् ।

**भीमसेनः** — गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय ।

**वृद्धः** — बाढम् । प्रथमः कल्पः ।

(निष्क्रान्तः सकलत्रपुत्र. केशवदासः)

**भीमसेनः** — हिडिम्बे! इतस्तावत्। वत्स! घटोत्कच! इतस्तावत्। तत्रभवन्तं केशवदासमाश्रमपदद्वारमात्रमपि सम्भावयिष्यामः ।

*यथा नदीनां प्रभवः समुद्रो
यथाहुतीनां प्रभवो हुताशः ।
यथेन्द्रियाणां प्रभवं§ मनोऽपि
तथा प्रभुर्नो भगवानुपेन्द्रः ॥ ५१ ॥

(निष्क्रान्ताः सर्वे)

---

मध्यमव्यायोगोऽवसितः ॥

---

शुभं भूयात् ।

---

* इतः प्राग् 'भरतवाक्यम्' इत्यपेक्षितं भाति । § प्रभवति ईष्टे इति प्रभवम् ईशितृ । पचाद्यच् ।

॥ श्रीः ॥

श्रीगणेशायनमः ।

महाकविश्रीभासप्रणीतं

# दूतवाक्यम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

भो भोः प्रतिहाराधिकृताः! महाराजो दुर्योधनः समाज्ञापयति ।

**सूत्रधारः**—भवतु, विज्ञातम् ।

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह ।
मन्त्रशालां रचयति भृत्यो दुर्योधनाज्ञया ॥ २ ॥

(निष्क्रान्तः)

स्थापना ।

---

१. 'पर्यैति मन्त्रशालायां भृ' क. ख. पाठः.

(ततः प्रविशति काञ्चुकीयः)

**काञ्चुकीयः**—भो भोः प्रतिहाराधिकृताः! महाराजो दुर्योधनः समाज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि। तदाहूयन्तां सर्वे राजान इति। (परिक्रम्यावलोक्य) अये अयं महाराजो दुर्योधन इत एवाभिवर्तते। य एषः,

श्यामो युवा सितदुकूलकृतोत्तरीयः
सच्छत्रचामरवरो रचिताङ्गरागः ।
श्रीमान् विभूषणमणिद्युतिरञ्जिताङ्गो
नक्षत्रमध्य इव पर्वगतः शशाङ्कः ॥ ३ ॥

(ततः प्रविशति[1] यथानिर्दिष्टो दुर्योधनः)

**दुर्योधनः**—

उद्भूतरोषमिव मे हृदयं सहर्षं
प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणाना-
मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥ ४ ॥

**काञ्चुकीयः**—जयतु महाराजः। महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

**दुर्योधनः**—सम्यक् कृतम्। प्रविश त्वमवरोधनम् ।

**काञ्चुकीयः**—यदाज्ञापयति महाराजः। (निष्क्रान्तः)

---

१. 'ति दु' क. पाठः,

दुर्योधनः— आर्यौ ! वैकर्णवर्षदेवौ ! उच्यताम्— अस्ति ममैकादशाक्षौहिणीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हति ।

किं किमाहतुर्भवन्तौ— महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति ।

सदृशमेतत्[1] । तदागम्यतां मन्त्रशालामेव प्रविशामः । आचार्य ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । पितामह ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । मातुल ! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ ! वैकर्णवर्षदेवौ ! प्रविशतां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरं प्रविशन्तु भवन्तः । वयस्य ! कर्ण ! प्रविशामस्तावत् ।

(प्रविश्य)

आचार्य ! एतत्[2] कूर्मासनम्, आस्यताम् । पितामह ! एतत्[3] सिंहासनम्, आस्यताम् । मातुल ! एतच्[4]चर्मासनम्, आस्यताम् । आर्यौ ! वैकर्णवर्षदेवौ ! आसातां भवन्तौ । भो भोः सर्वक्षत्रियाः ! स्वैरमासतां भवन्तः ।

किमिति किमिति महाराजो नास्त इति† । अहो सेवाधर्मः । नन्वयमहमासे । वयस्य ! कर्ण ! त्वमप्यास्स्व (उपविश्य)

---

१. 'द् आग' क ग. पाठः. २ 'तदासन' क. ग. पाठ'. ३. 'तदासन' क. ग. पाठः. ४. 'तदासन' क ग. पाठ..

---

† किं ब्रूथेति शेषः ।

आर्यौ! वैकर्णवर्षदेवौ! उच्यताम्—अस्ति ममैकादशाक्षौहि-णीबलसमुदयः । अस्य कः सेनापतिर्भवितुमर्हतीति ।

किमाहतुर्भवन्तौ—अत्रभवान् गान्धारराजो वक्ष्यतीति । भवतु, मातुलेनाभिधीयताम् ।

किमाह मातुलः—अत्रभवति गाङ्गेये स्थिते कोऽन्यः सेनाप-तिर्भवितुमर्हतीति ।

सम्यगाह मातुलः । भवतु भवतु । पितामह एव भवतु । वय-मप्येतदभिलषामः ।

सेनानिनादपटहस्वनशङ्खनादै-
श्चण्डानिलाहतमहोदधिनादकल्पैः ।
गाङ्गेयमूर्ध्नि पतितैरभिषेकतोयैः
सार्धं पतन्तु हृदयानि नराधिपानाम् ॥ ५ ॥

(प्रविश्य)

**काञ्चुकीयः**—जयतु महाराजः । एष खलु पाण्डवस्क-न्धावाराद् दौत्येनागतः पुरुषोत्तमो नारयणः ।

**दुर्योधनः**—मा तावद् भो बादरायण! । किं किं कंसभृ-त्यो दामोदरस्तव पुरुषोत्तमः । स गोपालकस्तव पुरुषोत्तमः । बार्हद्रथापहृतविषयकीर्त्तिभोगस्तव पुरुषोत्तमः । अहो पार्थिवा-सन्नमाश्रितस्य भृत्यजनस्य समुदाचारः । सगर्वं खल्वस्य वच-नम् । आ अपध्वंस! ।

**काञ्चुकीयः**— प्रसीदतु महाराजः । संभ्रमेण समुदाचारो विस्मृतः । (पादयोः पतति)

**दुर्योधनः**— संभ्रम इति । आ मनुष्याणामस्त्येव संभ्रमः । उत्तिष्ठोत्तिष्ठ ।

**काञ्चुकीयः**— अनुगृहीतोऽस्मि ।

**दुर्योधनः**— इदानीं प्रसन्नोऽस्मि । क एष दूतः प्राप्तः ।

**काञ्चुकीयः**— दूतः प्राप्तः केशवः ।

**दुर्योधनः**— केशव इति । एवमेष्टव्यम् । अयमेव समुदाचारः । भो भो राजानः! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्तः— अर्घ्यप्रदानेन पूजयितव्यः केशव इति । न मे रोचते । ग्रहणमस्यात्र हितं पश्यामि ।

ग्रहणमुपगते तु वासुभद्रे
हृतनयना इव पाण्डवा भवेयुः ।
गतिमतिरहितेषु पाण्डवेषु
क्षितिरखिलापि भवेन्ममासपत्ना ॥ ६ ॥

अपिच योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः । कोनुखलु ममाप्रत्युत्था(प?)नस्योपायः । हन्त दृष्ट उपायः । बादरायण! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम् । (अपवार्य) तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य ।

काञ्चुकीयः — यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः । अयं स चित्रपटः ।

दुर्योधनः — ममाग्रतः प्रसारय ।

काञ्चुकीयः — यदाज्ञापयति महाराजः । (प्रसारयति)

दुर्योधनः — अहो दर्शनीयोऽयं चित्रपटः । एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान् । एषा खलु द्रौपदी,

दुःशासनपरामृष्टा सम्भ्रमोत्फुल्ललोचना ।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते ॥ ७ ॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति । एष युधिष्ठिरः,

सत्यधर्मघृणायुक्तो द्यूतविभ्रष्टचेतनः ।
करोत्यपाङ्गविक्षेपैः शान्तामर्षं वृकोदरम् ॥ ८ ॥

एष इदानीमर्जुनः,

रोषाकुलाक्षः स्फुरिताधरोष्ठ-
स्तृणाय मत्वा रिपुमण्डलं तत् ।
उत्सादयिष्यन्निव सर्वराज्ञः*
शनैः समाकर्षति गाण्डिवज्याम् ॥ ९ ॥

---

* समासान्तविधेरनित्यत्वमाश्रयणीयम् । 'सर्वराजान्' इति वा पाठो भवेत् ।

एष युधिष्ठिरोऽर्जुनं निवारयति । एतौ नकुलसहदेवौ,

कृतपरिकरबन्धौ चर्मनिस्त्रिंशहस्तौ
परुषितमुखरागौ स्पष्टदष्टाधरोष्ठौ ।
विगतमरणशङ्कौ सत्वरं भ्रातरं मे
हरिमिव मृगपोतौ तेजसाभिप्रयातौ ॥ १० ॥

एष युधिष्ठिरः कुमारावुपेत्य निवारयति —

नीचोऽहमेव विपरीतमतिः कथं वा
रोषं परित्यजतमद्य नयानयज्ञौ ।
द्यूताधिकारमवमानममृष्यमाणाः
सत्त्वाधिकेषु वचनीयपराक्रमाः स्युः ॥ ११ ॥

इति । एष गान्धारराजः,

अक्षान् क्षिपन् $सकितवं प्रहसन् सगर्वं
सङ्कोचयन्निव मुदं द्विषतां स्वकीर्त्या ।
स्वैरासनो द्रुपदराजसुतां रुदन्तीं*
काक्षेण पश्यति लिखत्य(भिखां?) नयज्ञः ॥ १२ ॥

एतावाचार्यपितामहौ तां दृष्ट्वा लज्जायमानौ पटान्तान्तर्हित-मुखौ स्थितौ । अहो अस्य वर्णाढ्यता । अहो भावोपपन्नता । अहो युक्तलेखता । सुव्यक्तमालिखितोऽयं चित्रपटः । प्रीतोऽस्मि । कोऽत्र ।

---

$ सकैतवमित्यर्थः । 'स कितव.' इति वा पाठो भवेत् । * रुदधातोस्तुदादित्वमप्यत एव प्रयोगात् कल्प्यम् ।

काञ्चुकीयः — जयतु महाराजः ।

दुर्योधनः — बादरायण! आनीयतां स विहगवाहनमात्रविस्मितो दूतः ।

काञ्चुकीयः — यदाज्ञापयति महाराजः । (निष्क्रान्तः)

दुर्योधनः — वयस्य! कर्ण!

प्राप्तः किलाद्य वचनादिह पाण्डवानां
दौत्येन भृत्य इव कृष्णमतिः स कृष्णः ।
श्रोतुं सखे! त्वमपि सज्जय कर्ण! कर्णौ
‡नारीमृदूनि वचनानि युधिष्ठिरस्य ॥ १३ ॥

(ततः प्रविशति वासुदेवः काञ्चुकीयश्च)

वासुदेवः — अद्य खलु धर्मराजवचनाद् धनञ्जयाकृत्रिममित्रतया चाहवदर्पमनुक्तग्राहिणं सुयोधनं प्रति मयाप्यनुचितदौत्यसमयोऽनुष्ठितः । अथच,

कृष्णापराभवभुवा रिपुवाहिनीभ-
कुम्भस्थलीदलनतीक्ष्णगदाधरस्य ।
भीमस्य कोपशिखिना युधि पार्थपत्रि-
चण्डानिलैश्च कुरुवंशवनं विनष्टम् ॥ १४ ॥

इदं सुयोधनशिबिरम् । इह हि,

‡ नारीमृदूनि क्लीववचनविक्लवानि । वृत्तौ नारीशब्दो नारीसमवेतवचनक्रियावर्ती ।

आवासाः पार्थिवानां सुरपुरसदृशाः स्वच्छन्दविहिता
विस्तीर्णाः शस्त्रशाला बहुविधकर(रै?णै)ः शस्त्रैरुपचिताः ।
हेषन्ते मन्दुरास्थास्तुरगवरघटा बृंहन्ति करिण
ऐश्वर्यं स्फीतमेतत् स्वजनपरिभवादासन्नविलयम् ॥ १५ ॥

भोः!

दुष्टवादी गुणद्वेषी शठः स्वजननिर्दयः ।
सुयोधनो हि मां दृष्ट्वा नैव कार्यं करिष्यति ॥ १६ ॥

भो बादरायण! किं प्रवेष्टव्यम् ।

काञ्चुकीयः — अथकिमथकिम् । प्रवेष्टुमर्हति पद्मनाभः ।

वासुदेवः — (प्रविश्य) कथं कथं मां दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण । स्वैरमासतां भवन्तः ।

दुर्योधनः — कथं कथं केशवं दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः । अलमलं संभ्रमेण । स्मरणीयः पूर्वमाश्रावितो दण्डः । नन्वहमाज्ञप्ता ।

वासुदेवः — भोः सुयोधन! किमास्से ।

दुर्योधनः — (आसनात् पतित्वा आत्मगतम्) सुव्यक्तं प्राप्त एव केशवः ।

उत्साहेन मतिं कृत्वाप्यासीनोऽस्मि समाहितः ।
केशवस्य प्रभावेन चलितोऽस्म्यासनादहम् ॥ १७ ॥

अहो बहुमायोऽयं दूतः । (प्रकाशम्) भो दूत! एतदासनमास्यताम् ।

वासुदेवः—आचार्य! आस्यताम् । गाङ्गेयप्रमुखा राजानः! स्वैरमासतां भवन्तः । वयमप्युपविशामः । (उपविश्य) अहो दर्शनीयोऽयं चित्रपटः । मा तावत् । द्रौपदीकेशधर्षणमत्रालिखितम् । अहोतुखलु,

सुयोधनोऽयं स्वजनावमानं
पराक्रमं पश्यति बालिशत्वात् ।
को नाम लोके स्वयमात्मदोष-
मुद्घाटयेन्नष्टघृणः सभासु ॥ १८ ॥

आः अपनीयतामेष चित्रपटः ।

दुर्योधनः— बादरायण! अपनीयतां किल चित्रपटः ।

काञ्चुकीयः— यदाज्ञापयति महाराजः । (अपनयति)

दुर्योधनः—भो दूत !

धर्मात्मजो वायुसुतश्च भीमो
भ्रातार्जुनो मे त्रिदशेन्द्रसूनुः ।
यमौ च तावश्विसुतौ विनीतौ
सर्वे सभृत्याः कुशलोपपन्नाः ॥ १९ ॥

वासुदेवः—सदृशमेतद् गान्धारीपुत्रस्य । अथकिमथकिम् ।

कुशलिनः सर्वे । भवतो राज्ये शरीरे बाह्याभ्यन्तरे च कुशलमनामयं च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवाः—

अनुभूतं महद् दुःखं संपूर्णः समयः स च ।
अस्माकमपि धर्म्यं यद् दायाद्यं तद् विभज्यताम् ॥ २० ॥

इति ।

**दुर्योधनः**— कथं कथं दायाद्यमिति ।

वने पितृव्यो मृगयाप्रसङ्गतः
कृतापराधो मुनिशापमाप्तवान् ।
तदाप्रभृत्येव स दारनिस्स्पृहः
परात्मजानां पितृतां कथं व्रजेत् ॥ २१ ॥

**वासुदेवः**— पुराविदं भवन्तं पृच्छामि ।

विचित्रवीर्यो विषयी विपत्तिं
क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष
लभेत राज्यं जनकः कथं ते ॥ २२ ॥

मा मा भवान्,

एवं परस्परविरोधविवर्धनेन
शीघ्रं भवेत् कुरुकुलं नृप! नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषं
यत् त्वां युधिष्ठिरमुखाः प्रणयाद् ब्रुवन्ति ॥ २३ ॥

दुर्योधनः — भो दूत ! न जानाति भवान् राज्यव्यवहारम् ।

राज्यं नाम नृपात्मजैः सहृदयैर्जित्वा रिपून् भुज्यते
तल्लोके न तु याच्यते न तु पुनर्दीनाय वा दीयते ।
काङ्क्षा चेन्नृपतित्वमाप्तुमचिरात् कुर्वन्तु ते साहसं
स्वैरं वा प्रविशन्तु शान्तमतिभिर्जुष्टं शमायाश्रमम् ॥ २४ ॥

वासुदेवः — भोः सुयोधन ! अलं बन्धुजने परुषमभिधातुम् ।

पुण्यसञ्चयसम्प्राप्तामधिगम्य नृपश्रियम् ।
वञ्चयेद् यः सुहृद्बन्धून् स भवेद् विफलश्रमः ॥ २५ ॥

दुर्योधनः —

स्यालं तव गुरोर्भूपं कंसं प्राति न ते दया ।
कथमस्माकमेवं स्यात् तेषु नित्यापकारिषु ॥ २६ ॥

वासुदेवः — अलं तन्मद्दोषतो ज्ञातुम् ।

कृत्वा पुत्रवियोगार्तां बहुशो जननीं मम ।
वृद्धं स्वपितरं बद्ध्वा हतोऽयं मृत्युना स्वयम् ॥ २७ ॥

दुर्योधनः — सर्वथा वञ्चितस्त्वया कंसः । अलमात्मस्तवेन । न शौर्यमेतत् । पश्य,

†जामातृनाशव्यसनाभितप्ते
रोषाभिभूते मगधेश्वरेऽथ ।

---

† जामाता कंस. ।

पलायमानस्य भयातुरस्य
शौर्यं तदेतत् क्व गतं तवासीत् ॥ २८ ॥

**वासुदेवः** — भोः सुयोधन! देशकालावस्थापेक्षितं खलु शौर्यं नयानुगामिनाम् । इह तिष्ठतु तावदस्मद्गतः परिहासः । स्वकार्यमनुष्ठीयताम् ।

कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः ।
सम्बन्धो बन्धुभिः श्रेयान् लोकयोरुभयोरपि ॥ २९ ॥

**दुर्योधनः** —

देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत् ।
पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥ ३० ॥

**वासुदेवः** — (आत्मगतम्)

प्रसाद्यमानः साम्नायं न स्वभावं विमुञ्चति ।
हन्त संक्षोभयाम्येनं वचोभिः परुषाक्षरैः ॥ ३१ ॥

(प्रकाशम्) भोः सुयोधन! किं न जानीषेऽर्जुनस्य बलपराक्रमम् ।

**दुर्योधनः** — न जाने ।

**वासुदेवः** — भोः! श्रूयतां,

कैरातं वपुरास्थितः पशुपतिर्युद्धेन सन्तोषितो
वह्नेः खाण्डवमश्नतः सुमहती वृष्टिः शरैश्छादिता ।

देवेन्द्रार्तिकरा निवातकवचा नीताः क्षयं लीलया
नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः ॥३२॥

अपिच, तवापि प्रत्यक्षमपरं कथयामि ।

ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
विक्रोशन् घोषयात्रायां फल्गुनेनैव मोक्षितः ॥ ३३ ॥

किं बहुना,

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ! ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥ ३४ ॥

**दुर्योधनः**——कथं कथम् । हरिष्यन्ति हि पाण्डवाः ।

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष ! त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ॥ ३५ ॥

**वासुदेवः**—भोः कुरुकुलकलङ्कभूत ! अयशोलुब्ध ! वयं किल तृणान्तराभिभाषकाः ।

**दुर्योधनः**—भो गोपालक ! तृणान्तराभिभाष्यो भवान् ।

अवध्यां प्रमदां हत्वा हयं गोवृषमेव च ।
मल्लानपि सुनिर्लज्जो वक्तुमिच्छसि साधुभिः ॥ ३६ ।

**वासुदेवः**—भोः सुयोधन ! ननु क्षिपसि माम् ।

**दुर्योधनः**—आः अभाष्यस्त्वम् ।

अहमवधृतपाण्डरातपत्रो
द्विजवरहस्तधृताम्बुसिक्तमूर्धा ।
अवनतनृपमण्डलानुयात्रैः
सह कथयामि भवद्विधैर्न भाषे ॥ ३७ ॥

**वासुदेवः**—न व्याहरति किल मां सुयोधनः । भोः !

शठ ! बान्धवनिःस्नेह ! [‡]काक ! केकर ! पिङ्गल ! ।
त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥ ३८ ॥

भो भो राजानः ! गच्छामस्तावत् ।

**दुर्योधनः**—कथं यास्यति किल केशवः । दुःशासन ! दुर्मर्षण ! दुर्मुख ! दुर्बुद्धे ! दुष्टेश्वर ! दूतसमुदाचारमतिक्रान्तः केशवो बध्यताम् । कथमशक्ताः । दुःशासन ! न समर्थः खल्वसि ।

करितुरगनिहन्ता कंसहन्ता स कृष्णः
पशुपकुलनिवासादानुजीव्यानभिज्ञः ।
हृतभुजबलवीर्यः पार्थिवानां समक्षं
स्ववचनकृतदोषो बध्यतामेष शीघ्रम् ॥ ३९ ॥

अयमशक्तः । मातुल ! बध्यतामयं केशवः । कथं पराङ्मुखः

---

‡ काक ! इति दुश्चापलात्, केकर ! इति विकृताक्षत्वात्, पिङ्गल ! इति मार्जारवृत्तित्वाद् धान्यवृत्तित्वाद्वा क्षेपपराणि संबोधनानि ।

पतति । भवतु, अहमेव पाशैर्बध्नामि । (उपसर्पति)

**वासुदेवः**— कथं (वि?बन्धु)कामो मां किल सुयोधनः । भवतु, सुयोधनस्य सामर्थ्यं पश्यामि । (विश्वरूपमास्थितः)

**दुर्योधनः**—भो दूत!

सृजसि यदि समन्ताद् देवमायाः स्वमायाः
प्रहरसि यदि वा त्वं दुर्निवारैः सुरास्त्रैः ।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये बध्यसे त्वं मयाद्य ॥ ४० ॥

आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो ह्रस्वत्वं केशवस्य । आः तिष्ठेदानीम् । कथं न दृष्टः केशवः । अयं केशवः । अहो दीर्घत्वं केशवस्य । कथं न दृष्टः केशवः । अयं केशवः । सर्वत्र मन्त्रशालायां केशवा भवन्ति । किमिदानीं करिष्ये । भवतु, दृष्टम् । भो भो राजानः! एकेनैकः केशवो बध्यताम् । कथं स्वयमेव पाशैर्बद्धाः पतन्ति राजानः । साधु भो †जम्भक ! साधु ।

मत्कार्मुकोदरविनिःसृतबाणजालै-
र्विद्धक्षरत्क्षतजरञ्जितसर्वगात्रम् ।

---

† जम्भको मायावी ।

पश्यन्तु पाण्डुतनयाः शिबिरोपनीतं
त्वां बाष्परुद्धनयनाः परिनिःश्वसन्तः ॥ ४१ ॥

(निष्क्रान्तः)

वासुदेवः — भवतु, पाण्डवानां कार्यमहमेव साधयामि । भोः सुदर्शन ! इतस्तावत् ।

(ततः प्रविशति सुदर्शनः)

सुदर्शनः — एष भोः !

श्रुत्वा गिरं भगवतो विपुलप्रसादा-
न्निर्धावितोऽस्मि परिवारिततोयदौघः ।
कस्मिन् खलु प्रकुपितः कमलायताक्षः
कस्याद्य मूर्धनि मया प्रविजृम्भितव्यम् ॥ ४२ ॥

क्वनुखलु भगवान् नारायणः ।

अव्यक्तादिरचिन्त्यात्मा लोकसंरक्षणोद्यतः ।
एकोऽनेकवपुः श्रीमान् द्विषद्बलनिषूदनः ॥ ४३ ॥

(विलोक्य) अये अयं भगवान् हस्तिनपुरद्वारे दूतसमुदाचारेणोपस्थितः । कुतः खल्वापः कुतः खल्वापः । भगवति ! आकाशगङ्गे ! आपस्तावत् । हन्त स्रवति । (आचम्योपसृत्य) जयतु भगवान् नारायणः । (प्रणमति)

वासुदेवः — सुदर्शन ! अप्रतिहतपराक्रमो भव ।

सुदर्शनः — अनुगृहीतोऽस्मि ।

**वासुदेवः**—दिष्ट्या भवान् कर्मकाले प्राप्तः ।

**सुदर्शनः**—कथं कथं कर्मकाल इति । आज्ञापयतु भगवानाज्ञापयतु ।

किं मेरुमन्दरकुलं परिवर्तयामि
संक्षोभयामि सकलं मकरालयं वा ।
नक्षत्रवंशमखिलं भुवि पातयामि
नाशक्यमस्ति मम देव! तव प्रसादात् ॥ ४४ ॥

**वासुदेवः**—भोः सुदर्शन! इतस्तावत् । भोः सुयोधन!

यदि लवणजलं वा कन्दरं वा गिरीणां
ग्रहगणचरितं वा वायुमार्गं प्रयासि ।
मम भुजबलयोगप्राप्तसंजातवेगं
भवतु चपल! चक्रं कालचक्रं तवाद्य ॥ ४५ ॥

**सुदर्शनः**—भोः सुयोधनहतक! (इति पुनर्विचार्य) प्रसीदतु प्रसीदतु भगवान् नारायणः ।

महीभारापनयनं कर्तुं जातस्य भूतले ।
अस्मिन्नेवं गते देव! ननु स्याद् विफलः श्रमः ॥ ४६ ॥

**वासुदेवः**—सुदर्शन! रोषात् समुदाचारो नावेक्षितः । गम्यतां स्वनिलयमेव ।

**सुदर्शनः**—यदाज्ञापयति भगवान् नारायणः । कथं कथं गोपालक इति । त्रिचरणातिक्रान्तत्रिलोको नारायणः खल्वत्र-

भवान् । शरणं व्रजन्तु भवन्तः । यावद् गच्छामि । अये एतद् भगवदायुधवरं शार्ङ्गं प्राप्तम् ।

तनुमृदुललिताङ्गं स्त्रीस्वभावोपपन्नं
हरिकरधृतमध्यं शत्रुसङ्घैककालः ।
कनकखचितपृष्ठं भाति कृष्णस्य पार्श्वे
नवसलिलदपार्श्वे चारुविद्युल्लतेव ॥ ४७ ॥

भो भोः! प्रशान्तरोषो भगवान् नारायणः । गम्यतां स्वनिलयमेव । हन्त निवृत्तः । यावद् गच्छामि । अये इयं कौमोदकी प्राप्ता ।

मणिकनकविचित्रा चित्रमालोत्तरीया
सुररिपुगणगात्रध्वंसने जाततृष्णा ।
गिरिवरतटरूपा दुर्निवारातिवीर्या
व्रजति नभसि शीघ्रं मेघबृन्दानुयात्रा ॥ ४८ ॥

हे कौमादकि! प्रशान्तरोषो भगवान् नारायणः । हन्त निवृत्ता। यावद् गच्छामि । अये अयं पाञ्चजन्यः प्राप्तः ।

पूर्णेन्दुकुन्दकुमुदोदरहारगौरो
नारायणाननसरोजकृतप्रसादः ।
यस्य स्वनं प्रलयसागरघोषतुल्यं
गर्भा निशम्य निपतन्त्यसुराङ्गनानाम् ॥ ४९ ॥

हे पाञ्चजन्य! प्रशान्तरोषो भगवान् । गम्यताम् । हन्त निवृत्तः । अये नन्दकासिः प्राप्तः ।

वनिताविग्रहो युद्धे महासुरभयङ्करः ।
प्रयाति गगने शीघ्रं महोल्केव विभात्ययम् ॥ ५० ॥

हे नन्दक! प्रशान्तरोषो भगवान्। गम्यताम् । हन्त निवृत्तः । यावद् गच्छामि । अये एतानि भगवदायुधवराणि ।

सोऽयं खड्गः खरांशोरपहसिततनुः स्वैः करैर्नन्दकाख्यः
सेयं कौमोदकी या सुररिपुकठिनोरःस्थलक्षोददक्षा ।
सैषा शार्ङ्गाभिधाना प्रलयघनरवज्यारवा चाप(रेखा
सोऽयं गम्भी)रघोषः शशिकरविशदः शङ्खराट् पाञ्चजन्यः ॥

हे शार्ङ्ग! कौमोदकि! पाञ्चजन्य!
दैत्यान्तकृन्नन्दक! शत्रुवह्ने! ।
प्रशान्तरोषो भगवान् मुरारिः
स्वस्थानमेवात्र हि (गच्छ ता)वत् ॥ ५२ ॥

हन्त निवृत्ताः । यावद् गच्छामि । अये अत्युद्धूतो वायुः । अतितपत्यादित्यः । चलिताः पर्वताः । क्षुब्धाः सागराः । पतिता वृक्षाः । भ्रान्ता मेघाः । प्रलीना वासुकिप्रभृतयो भुजङ्गेश्वराः । किन्नुखल्विदम् । अये अयं भगवतो वाहनो गरुडः प्राप्तः ।

सुरासुराणां परिखेदलब्धं
येनामृतं मातृविमोक्षणार्थम् ।
आच्छिन्नमासीद् द्विषतो मुरारे-
स्त्वामुद्वहामीति वरोऽपि दत्तः ॥ ५३ ॥

हे काश्यपप्रियसुत! गरुड! प्रशान्तरोषो भगवान् देवदेवेशः । गम्यतां स्वनिलयमेव । हन्त निवृत्तः । यावद् गच्छामि ।

एते + + + + + + + + + + +
+ + + संभ्रमचलन्मकुटोत्तमाङ्गाः ।
रुष्टेऽच्युते विगतकान्तिगुणाः प्रशान्तं
श्रुत्वा श्रयन्ति सदनानि (नि)वृत्ततापाः ॥ ५४ ॥

यावदहमपि कान्तां मेरुगुहामेव यास्यामि । (निष्क्रान्त)

वासुदेवः — यावदहमपि पाण्डवशिबिरमेव यास्यामि ।

(नेपथ्ये)

नखलु नखलु गन्तव्यम् ।

वासुदेवः — अये वृद्धराजस्वर इव । भो राजन्! एष स्थितोऽस्मि ।

(ततः प्रविशति धृतराष्ट्रः)

धृतराष्ट्रः — क्वनुखलु भगवान् नारायणः । क्वनुखलु भगवान् पाण्डवश्रेयस्करः । क्वनुखलु भगवान् विप्रप्रियः । क्वनुखलु भगवान् देवकीनन्दनः ।

मम पुत्रापराधात् तु शार्ङ्गपाणे! तवाधुना ।
एतन्मे त्रिदशाध्यक्ष! पादयोः पतितं शिरः ॥ ५५ ॥

(पतति)

वासुदेवः —हा धिक् । पतितोऽत्रभवान् । उत्तिष्ठोत्तिष्ठ ।

धृतराष्ट्रः — अनुगृहीतोऽस्मि । भगवन् ! इदमर्घ्यं पाद्यं च प्रतिगृह्यताम् ।

वासुदेवः — सर्वं गृह्णामि । किं ते भूयः प्रियमुपहरामि ।

धृतराष्ट्रः — यदि मे भगवान् प्रसन्नः, किमतःपरमिच्छामि ।

वासुदेवः — गच्छतु भवान् पुनर्दर्शनाय ।

धृतराष्ट्रः — यदाज्ञापयति भगवान् नारायणः । (निष्क्रान्तः)

(भरतवाक्यम्)

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ ५६ ॥

(निष्क्रान्ताः सर्वे)

दूतवाक्यं समाप्तम् ।

---

शुभं भूयात् ।

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतं

# दूतघटोत्कचम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**——

नारायणस्त्रिभुवनैकपरायणो वः
पायादुपायगतयुक्तिकरः सुराणाम् ।
लोकत्रयाविरतनाटकतन्त्रवस्तु-
प्रस्तावनप्रतिसमापनसूत्रधारः ॥ १ ॥

ार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञाप-
ग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

भो! निवेद्यतां निवेद्यतां तावत् ।

**सूत्रधारः**—भवतु, विज्ञातम् । एष खलु संशप्तकानीकनि-
ते जनार्दनसहाये धनञ्जये तदनन्तरमुपगतभीष्मवधामर्षि-
र्तराष्ट्रैः परिवार्य निहतः कुमारोऽभिमन्युः । तथाहि,

यान्त्यर्जुनप्रत्यभियानभीता
यतोऽर्जुनस्तां दिशमीक्षमाणाः ।
नराधिपाः स्वानि निवेशनानि
सौभद्रबाणाङ्कितनष्टसंज्ञाः ॥ २ ॥

(निष्क्रान्तः)

स्थापना ।

---

(ततः प्रविशति भटः)

भटः — निवेद्यतां निवेद्यतां पुत्रशतश्लाघ्यबान्धवाय विज्ञानविस्तारितविनयाचारदीर्घचक्षुषे महाराजाय धृतराष्ट्राय । एष खलु,

यौधस्यन्दनवाजिवारणवधैर्विक्षोभ्य राज्ञां बलं
बालेनार्जुनक(भ?र्म) येन समरे लीलायता‡ दर्शितम् ।
सौभद्रः स रणे नराधिपशतैर्वेगागतैः (सर्विश्च-
खेशतस्व?*) पितामहस्य सहसैवोत्सङ्गमारोपितः ॥ ३ ॥

इति ।

(ततः प्रविशति धृतराष्ट्रो गान्धारी दुःशला प्रतिहारी च)

धृतराष्ट्रः — कथं कथं भोः!

---

‡ लीलाशब्दो लोहितादिगणे कण्ड्वादिगणे वा द्रष्टव्यः । * घनूरेखान्तर्गत 'सर्वतः खे यातस्य' इति पठनीयं भाति ।

केनैतच्छ्रुतिपथदूषणं कृतं मे
कोऽयं मे प्रियमिति विप्रियं ब्रवीति ।
कोऽस्माकं शिशुवधपातकाङ्क्षितानां
वंशस्य क्षयमवघोषयत्यभीतः ॥ ४ ॥

**गान्धारी**—(क) महाराअ! अत्थि पुण, जाणीअदि केवळं पुत्तसंखअकारओ कुळविग्गहो भविस्सदि त्ति ।

**धृतराष्ट्रः**—गान्धारि! ज्ञायते ।

**गान्धारी**—(ख) महाराअ! कदाणुखु ।

**धृतराष्ट्रः**—गान्धारि! शृणु ।

अद्याभिमन्युनिधनाज्जनितप्रकोपः
सामर्षकृष्णधृतरश्मिगुणप्रतोदः ।
पार्थः करिष्यति तदुग्रधनुस्सहायः
शान्तिं गमिष्यति विनाशमवाप्य लोकः ॥ ५ ॥

**गान्धारी**—(ग) हा अभिमञ्ञो! ईदिसे वि णाम (उ)त्तमपुरुसक्खअकारए कुळविग्गहे वत्तमाणे बाळभावणिमज्जअं

---

(क) महाराज! अस्ति पुनः, ज्ञायते केवलं पुत्रसंक्षयकारकः कुलविग्रहो भविष्यतीति ।

(ख) महाराज! कदानुखलु ।

(ग) हा अभिमन्यो! ईदृशेऽपि नामोत्तमपुरुषक्षयकारके कुलविग्रहे वर्तमाने

अम्माणं *भ(ळळ?)ग्गकमेण करअन्तो कहिं दाणि पोत्तअ! गदो सि ।

**दुःशला** — (क) जेण दाणि वहूए उत्तराए वेधव्वं दाइदं, तेण अत्तणो जुवदिजणस्स वेधव्वमादिट्ठं ।

**धृतराष्ट्रः** — अथ केनैष व्यसनार्णवस्य सेतुर्बद्धः ।

**भटः** — महाराज! मया ।

**धृतराष्ट्रः** — को भवान् ।

**भटः** — महाराज! ननु जयत्रातोऽस्मि ।

**धृतराष्ट्रः** — जयत्रात !

केनाभिमन्युर्निहतः कस्य जीवितमप्रियम् ।
पञ्चानां पाण्डवाग्नीनामात्मा येनेन्धनीकृतः ॥ ६ ॥

**भटः** — महाराज! बहुभिः खलु पार्थिवैः सह समागतैर्निहतः कुमारोऽभिमन्युः । स्यात् तु जयद्रथो निमित्तभूतः ।

**धृतराष्ट्रः** — किं किं जयद्रथो निमित्तभूतः ।

---

बालभावनिमज्जनमस्माकं भाग्यक्रमेण कुर्वन् कुत्रेदानीं पौत्रक! गतोऽसि ।

(क) येनेदानीं वध्वै उत्तरायै वैधव्यं दत्तं, तेनात्मनो युवतिजनाय वैधव्यमादिष्टम् ।

---

* दुर्भतयक्रमेणेत्यर्थः । दुरशब्दो वा भकारात् प्राक् पाठ्यः ।

**भटः**—महाराज ! अथकिम् ।

**धृतराष्ट्रः**—हन्त जयद्रथो निहतः ।

(तच्छ्रुत्वा दुःशला रोदिति)

**धृतराष्ट्रः**—कैषा रोदिति ।

**प्रतिहारी**—(क) महाराअ ! भट्टिदारिआ दुस्शळा ।

**धृतराष्ट्रः**—वत्से ! अलमलं रुदितेन । पश्य,

भर्तुस्ते नूनमत्यन्तमवैधव्यं न रोचते ।
येन गाण्डीविबाणानामात्मा लक्षीकृतः स्वयम् ॥ ७ ॥

**दुःशला**—(ख) तेण हि अणुजाणादु मं तादो, अहं पि गमिस्सं वहूए उत्तराए सआसं ।

**धृतराष्ट्रः**—वत्से ! किमभिधास्यसि ।

**दुःशला**—(ग) ताद ! एवञ्च भणिस्सं—अज्ज काळिअं च दे वेसग्गहणं अहं वि उवधारइस्सामि त्ति ।

---

(क) महाराज ! भर्तृदारिका दुःशला ।

(ख) तेन ह्यनुजानातु मां तातः, अहमपि गमिष्यामि वध्वा उत्तरायाः सकाशम् ।

(ग) तात ! एवञ्च भणिष्यामि—अद्य कालिकं च ते वेषग्रहणमहमप्युपधारयिष्यामीति ।

गान्धारी — (क) पुत्तिए! माखु माखु अमङ्गळं भणाहि। जीवदि खु दे भत्ता।

दुःशला — (ख) अम्ब! कुदो मे एत्तिआणि भाअधेआणि। (जो?)जणद्दणसहाअस्स धणञ्जअस्स विप्पिअं करिअ को हि णाम जीविस्सिदि।

धृतराष्ट्रः — सत्यमाह (तिचस्थिनी?*) दुःशला। कुतः,

कृष्णस्याष्टभुजोपधानरचिते योऽङ्के विवृद्धश्चिरं
    यो मत्तस्य हलायुधस्य भवति प्रीत्या द्वितीयो मदः।
पार्थानां सुरतुल्यविक्रमवतां स्नेहस्य यो भाजनं
    तं हत्वा क इहोपलप्स्यति\$ चिरं स्वैर्दुष्कृतैर्जीवितम् ॥८॥

जयत्रात! अथ तदवस्थं पुत्रं दृष्ट्वा किं प्रतिपन्नं तेन गाण्डीवधन्वना।

भटः — महाराज! किं वार्जुनसमीपे वृत्तमेतत्।

धृतराष्ट्रः — कथमर्जुनोऽपि नात्रासीत्।

---

(क) पुत्रिके! मा खलु मा खल्वमङ्गलं भण। जीवति खलु ते भर्ता।

(ख) अम्ब! कुतो मे एतावन्ति भागधेयानि। जनार्दनसहायस्य धनञ्जयस्य विप्रियं कृत्वा को हि नाम जीविष्यति।

---

* 'तपस्विनी' इति पाठ्यम्। \$ इहात्मनेपदानित्यत्वं बोध्यम्।

भटः — महाराज ! अथकिम् ।

धृतराष्ट्रः — कथमिदानीं वृत्तमेतत् ।

भटः — महाराज ! श्रूयतां—संशप्तकानीकनिवाहिते जनार्दनसहाये धनञ्जये स बालभावाददृष्टदोषः सङ्ग्राममवतीर्णः कुमारोऽभिमन्युः ।

धृतराष्ट्रः — हन्त ! युक्तरूपोऽस्य वधः । को हि समर्थः सन्निहितशार्दूलां गुहां धर्षयितुम् । अथ शेषाः पाण्डवाः किमनुतिष्ठन्ति ।

भटः — महाराज ! श्रूयतां,

चितां न तावत् स्वयमस्य देह-
मारोपयन्त्यर्जुनदर्शनार्थम् ।
तेषां च नामान्युपधारयन्ति
यैस्तस्य गात्रे प्रहृतं नरेन्द्रैः ॥ ९ ॥

धृतराष्ट्रः — गान्धारि ! तदागम्यताम् । गङ्गाकूलमेव यास्यावः ।

गान्धारी — (क) महाराअ ! णं तहिं गाहामो ।

धृतराष्ट्रः — गान्धारि ! शृणु ,

---

(क) महाराज ! ननु तत्र गाहावहे ।

अद्यैव दास्यामि जलं हृतेभ्यः
स्वेनापराधेन तवात्मजेभ्यः ।
न त्वस्मि शक्तः सलिलप्रदानैः
कर्तुं नृपाणां शिबिरोपरोधम् ॥ १० ॥

(ततः प्रविशति दुर्योधनो दुःशासनः शकुनिश्च)

**दुर्योधनः** — वत्स! दुःशासन!

यातोऽभिमन्युनिधनात् स्थिरतां विरोधः
प्राप्तो जयः प्रचलिता रिपवो निरस्ताः ।
उन्मूलितोऽस्य च मदो मधुसूदनस्य
लब्धो मयाद्य सममभ्युदयेन शब्दः ॥ ११ ॥

**दुःशासनः** — अहोतुखलु,

रुद्धाः पाण्डुसुता जयद्रथबलेनाक्रम्य शत्रोर्बलं
सौभद्रे विनिपातिते शरशतक्षेपैर्द्वितीयेऽर्जुने ।
प्राप्तैश्च व्यसनानि भीष्मपतनादस्माभिरस्याहवे
तीव्राः शोकशराः कृताः खलु मनस्येषां सुतोत्सादनात् ॥ १२ ॥

**शकुनिः** —

जयद्रथेनाद्य महत् कृतं रणे
नृपैरसम्भावितमात्मपौरुषम् ।
प्रसह्य तेषां यदनेन संयुगे
समं सुतेनाप्रतिमं हृतं यशः ॥ १३ ॥

दुर्योधनः — मातुल !

शकुनिः — वत्स ! किम् ।

दुर्योधनः — मातुल ! इतस्तावत् । वत्स ! दुःशासन ! इतस्तावत् । तत्रभवन्तं तातमभिवादयिष्यामः ।

शकुनिः — वत्स ! दुर्योधन ! मामैवम् ।

कामं न तस्य रुचितः कुलविग्रहोऽय-
मस्मांश्च गर्हयति स प्रियपाण्डवत्वात् ।
युद्धोत्थितैर्जयमवाप्य हि तुल्यरूपम्*
एवं प्रहृष्टवदनैरभिगन्तुमेनम् ॥ १४ ॥

दुर्योधनः — मातुल ! मामैवम् । यथा तथा भवतु, तत्रभवन्तं तातमभिवादयिष्यामः (परिक्रामति)

दुर्योधनः — तात ! दुर्योधनोऽहमभिवादये ।

दुःशासनः — तात ! दुःशासनोऽहमभिवादये ।

शकुनिः — शकुनिरहमभिवादये ।

सर्वे — कथमाशीर्वचनं न प्रयुज्यते ।

धृतराष्ट्रः — पुत्र ! कथमाशीर्वचनमिति ।

सौभद्रे निहते बाले हृदये कृष्णपार्थयोः ।
जीविते निरपेक्षाणां कथमाशीः प्रयुज्यते ॥ १५ ॥

---

* तुल्यरूप युक्तरूपमित्यर्थः ।

दुर्योधनः— तात! किंकृतोऽयं सम्भ्रमः ।

धृतराष्ट्रः— किंकृतोऽयं सम्भ्रम इति ।

एका कुलेऽस्मिन् बहुपुत्रनाथे
लब्धा सुता पुत्रशताद् विशिष्टा ।
सा बान्धवानां भवतां प्रसादाद्
वैधव्यमश्लाघ्यमवाप्स्यतीति ॥ १६ ॥

दुर्योधनः— किं चात्र जयद्रथस्य ।

धृतराष्ट्रः— तेन किल वरविदग्धेन रुद्धाः पाण्डवाः ।

दुर्योधनः— आ तेन रुद्धाः, बहुभिः खल्वन्यैः ।

धृतराष्ट्रः— भोः कष्टम् ।

बहूनां समुपेतानामेकस्मिन्निर्घृणात्मनाम् ।
बाले पुत्रे प्रहरतां कथं न पतिता भुजाः ॥ १७ ॥

दुर्योधनः— तात!

वृद्धं भीष्मं छलैर्हत्वा कथं न पतिता भुजाः ।
हत्वास्माकं पतिष्यन्ति तमबालपराक्रमम् ॥ १८ ॥

धृतराष्ट्रः—पुत्र! किं भीष्मस्य निपातनमभिमन्योश्च वधः समः* ।

---

* ममेति स्यात् ।

**दुर्योधनः** — तात! कथं न समः ।

**धृतराष्ट्रः** — पुत्र! श्रूयताम्,

स्वच्छन्दमृत्युर्निहतो हि भीष्मः
स्वेनोपदेशेन कृतात्मतुष्टः‡ ।
अयं तु बालः कुरुवंशनाथ-
श्छिन्नोऽर्जुनस्य प्रथमः प्रवालः ॥ १९ ॥

**दुःशासनः** — तात! बालो न बाल इति। अभिमन्युना,

**धृतराष्ट्रः** — किं किं दुःशासनो व्याहरति।

**दुःशासनः** — अथकिम् ।

सर्वेषां नः पश्यतां युध्यतां च
†व्या(च्या?धा)मोष्मं *गृह्य चापं करेण ।
सूर्येणेवाभ्यागतैरंशुजालैः
सर्वे बाणैरङ्किता भूमिपालाः ॥ २० ॥

---

‡ कृतार्थतुष्ट इत्यर्थः । तथैव वा पाठो भवेत्।

† व्याधामोष्म दम्भोलिविषम् । 'व्याधाम पुंसि दम्भोलि.' इति वैजयन्ती, ऊष्मो घ-र्मेऽश्रुणि तथा ज्येष्ठ ऊष्मा स्त्रिया त्विपि' इति चोपालितश्च ।

* 'क्त्वापिच्छन्दसि' (७-१-३८) इति सूत्रे अपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वाद् भा-षायामसमासे क्त्वो ल्यबि'ति 'स्वश्चन त्यज्य गच्छति' इति प्रयोगगतो ल्यप् साधितो दुर्घटवृत्तौ 'समासेऽनञ्पूर्वे' (७ १-३७) इति सूत्रे । सैव गतिरिहाश्रयणीया । अथवा 'व्याधामोष्म' इत्यनु-स्वारो दीर्घलिपिस्थाने लेखकेन भ्रमाद् लिखित इति कल्प्यम् । तथा च 'व्याधामोष्मागृह्य' इति पाठ. स्यात् । व्याधामस्येवोष्मा यस्य तत् व्याधामोष्म दम्भोलिशक्तिकमित्यर्थः । चापविशे-षणमिद नकारान्तोत्तरपदकम् । चापशब्दश्चेह नपुंसकलिङ्ग आश्रयणीय 'अस्त्रियौ चापधनुषा-वि'ति वैजयन्त्युक्ते । एवञ्च 'आगृह्य' इति ल्यबन्तं लभ्यते । 'अयमागृहीतकमनीयकङ्कण.' इतिवच्चात्राङ्पूर्वो ग्रहिः सम्यग्ग्रहणे वर्तिष्यते ।

धृतराष्ट्रः — कष्टं भोः!

बालेनैकेन तावद् भोः! सौभद्रेणेदृशं कृतम्।
पुत्रव्यसनसन्तप्तः पार्थो वः किं करिष्यति ॥ २१ ॥

दुर्योधनः — किं करिष्यति ।

धृतराष्ट्रः — तत् करिष्यति, यत् सावशेषायुषो द्रक्ष्यथ।

दुर्योधनः — तात! कस्तावदर्जुनो नाम ।

धृतराष्ट्रः — पुत्र! अर्जुनमपि न जानीषे ।

दुर्योधनः — न जाने ।

धृतराष्ट्रः — तेन हि, अहमपि न जाने । किन्तु, अर्जुनस्य बलवीर्यज्ञा बहवः सन्ति । तान् पृच्छ ।

दुर्योधनः — तात! केऽर्जुनस्य बलवीर्यज्ञा मया प्रष्टव्याः।

धृतराष्ट्रः — पुत्र! श्रूयतां,

शक्रं पृच्छ पुरा निवातकवचप्राणोपहारार्चितं
पृच्छास्त्रैः परितोषितं बहुविधैः कैरातरूपं हरम् ।
पृच्छाग्निं भुजगाहुतिप्रणयिनं यस्तर्पितः खाण्डवे
[1]विद्यारक्षितमद्य येन च जितस्त्वं पृच्छ चित्राङ्गदम् ॥२२॥

दुर्योधनः — यद्येतद् वीर्यमर्जुनस्य, किमस्माकं बले न सन्ति प्रतियोद्धारोऽर्जुनस्य ।

---

[1] विद्यारक्षितं विद्याधरम् ।

**धृतराष्ट्रः**—पुत्र! यदि, के।

**दुर्योधनः**—ननु कर्ण एव तावत्।

**धृतराष्ट्रः**—अहो हास्यः खलु तपस्वी कर्णः।

**दुर्योधनः**—केन कारणेन।

**धृतराष्ट्रः**—श्रूयतां,

शक्रापनीतकवचोऽर्धरथः प्रमादी
व्याजोपलब्धविफलास्त्रबलो घृणावान्।
कर्णोऽर्जुनस्य किल(चा? या)स्यति तुल्यभावं
यद्यस्त्रदानगुरवो दहनेन्द्ररुद्राः॥ २३॥

**शकुनिः**—प्रभवति भवानस्मानवधीरयितुम्।

**धृतराष्ट्रः**—शकुनिरेष व्याहरति। भोः शकुने!

त्वया हि यत् कृतं कर्म सततं द्यूतशालिना।
तत् कुलस्यास्य वैराग्निर्बालेष्वपि न शाम्यति॥ २४॥

**दुर्योधनः**—अये,

भूमिकम्पः सशब्दोऽयं कुतोनु सहसोत्थितः।
उल्काभिश्च पतन्तीभिः प्रज्वालितमिवाम्बरम्॥ २५॥

**धृतराष्ट्रः**—पुत्र! एवं मन्ये,

सुव्यक्तं निहतं दृष्ट्वा पौत्रमायस्तचेतसः।
उल्कारूपाः पतन्त्येते महेन्द्रस्याश्रुबिन्दवः॥ २६॥

**दुर्योधनः**— जयत्रात! गच्छ, पाण्डवशिबिरे शङ्खपटह-सिंहनादरवोन्मिश्रः किंकृतोऽयं शब्द इति ज्ञायताम् ।

**भटः**— यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) संशप्तकानीकनिग्राहितप्रतिनिवृत्तेन धनञ्जयेन निहतं पुत्रमङ्कस्थमश्रुभिः परिषिच्य जनार्दनावभर्त्सितेन प्रतिज्ञातं किलानेन ।

**दुर्योधनः**— किमिति किमिति ।

**भटः**—

तस्यैव व्यवसायतुष्टहृदयैस्तद्विक्रमोत्साहिभि-
स्तुष्टास्यैर्जितमित्यवेक्ष्य सहसा नादः प्रकर्षात् कृतः ।
आक्रान्ता गुरुभिर्धराधरवरैः संक्षेपितैः पार्थिवै-
र्भूमिश्चागतसम्भ्रमेव युवतिस्तस्मिन् क्षणे कम्पिता ॥ २७ ॥

**धृतराष्ट्रः**—

प्रतिज्ञा(सा?स्व)रमात्रेण कम्पितेयं वसुन्धरा ।
सुव्यक्तं धनुषि स्पृष्टे त्रैलोक्यं विचलिष्यति ॥ २८ ॥

**दुर्योधनः**— किमनेन प्रतिज्ञातम् ।

**भटः**—

येन मे निहतः पुत्रस्तुष्टिं ये च हते गताः ।
श्वः सूर्येऽस्तमसम्प्राप्ते निहनिष्यामि तानहम् ॥ २९ ॥

इति ।

दुर्योधनः — प्रतिज्ञाव्याघाते प्रयत्नमनुतिष्ठामि ।

धृतराष्ट्रः — पुत्र ! किं करिष्यसि ।

दुर्योधनः — ननु सर्वाक्षौहिणीसन्दोहेनच्छादयिष्ये जयद्रथम् । अपिच,

द्रोणोपदेशेन यथा तथैव
संयोजये व्यूहमभेद्यरूपम् ।
खिन्नाशयास्ते सगजाः सयोधा
अप्राप्तकामा ज्वलनं विशेयुः ॥ ३० ॥

धृतराष्ट्रः —

अपि प्रविष्टं धरणीमप्यारूढं नभःस्थलम् ।
सर्वत्रानुगमिष्यन्ति शरास्ते कृष्णचक्षुषः ॥ ३१ ॥

भटः —

क्रूरमेवं नरपतिं नित्यमुद्यतशासनम् ।
यः कश्चिदपरो ब्रूयान्न तु जीवेत् स तत्क्षणम् ॥ ३२ ॥

(ततः प्रविशति घटोत्कचः)

घटोत्कचः — एष भोः !

प्रयामि सौभद्रविनाशचो(द)कं
दिदृक्षुरद्यारिमनार्यचेतसम् ।

विचिन्तयंश्चक्रधरस्य शासनं
यथा गजेन्द्रोऽङ्कुशशङ्कितो बलिम् ॥ ३३ ॥

(अधो विलोक्य) इदमन्योपस्थानद्वारमुखम् । यावदवतरामि (अवतीर्य) आत्मनैवात्मानं निवेदयिष्ये ।

हैडिम्बोऽस्मि घटोत्कचो यदुपतेर्वाक्यं गृहीत्वागतो
द्रष्टव्योऽत्र मया गुरुः स्वचरितैर्दोषैर्गतः शत्रुताम् ।

दुर्योधनः—

एह्येहि प्रविश स्वशत्रुभवनं कौतूहलं मे महद्
धृष्टं श्रावय मां जनार्दनवचो दुर्योधनोऽहं स्थितः ॥ ३४ ॥

घटोत्कचः—(प्रविश्य) अये अयमत्रभवान् धृतराष्ट्रः अयं ननु ललितगम्भीराकृतिविशेषः । आश्चर्यमाश्चर्यम् ।

वृद्धोऽप्यनाततवली(शुत्र?शत)संहतांसः
श्रद्धेयरूप इव पुत्रशतस्य धृत्या ।
मन्ये सुरैस्त्रिदिवरक्षणजातशङ्कै-
स्त्रासान्निमीलितमुखोऽत्रभवान् हि सृष्टः ॥ ३५ ॥

पितामह ! अभिवादये घटोत्क, न न, युधिष्ठिरादयश्च मे गुरवं भवन्तमभिवादयन्ति । पश्चाद् घटोत्कचोऽहमभिवादये ।

धृतराष्ट्रः—एह्येहि [§]पुत्र ! (?)

---

§ 'हिडिम्बापुत्र ! इति वा पौत्र ! इति वा संबोधनमिदं स्यात् ।

न मे (प्रियादारवमिदं?)$ ममापि
यद् भ्रातृनाशाद् *व्यसितस्तवात्मा ।
इत्थं च ते नानुगतोऽयमर्थो
मत्पुत्रदोषात् कृपणीकृतोऽस्मि ॥ ३६ ॥

घटोत्कचः—अहो कल्याणः खल्वत्रभवान् । कल्याणानां प्रसूतिं पितामहमाह भगवांश्चक्रायुधः ।

धृतराष्ट्रः—(आसनादुत्थाय) किमाज्ञापयति भगवांश्चक्रायुधः ।

घटोत्कचः—न न न, आसनस्थेनैव भवता श्रोतव्यो जनार्दनस्य सन्देशः ।

धृतराष्ट्रः—यदाज्ञापयति भगवांश्चक्रायुधः । (उपविशति)

घटोत्कचः—पितामह! श्रूयतां—हा वत्स! अभिमन्यो! हा वत्स! कुरुकुलप्रदीप! हा वत्स! यदुकुलप्रवाल! तव जननीभ्रातरं जनार्दनं मामपि परित्यज्य पितामहं द्रष्टुमाशया स्वर्गमभिगतोऽसि । पितामह! एकपुत्रविनाशादर्जुनस्य तावदीदृशी खल्ववस्था, का पुनर्भवतो भविष्यति । ततः क्षिप्रमिदानीमात्मबलाधानं कुरुष्व, यथा ते पुत्रशोकसमुत्थितोऽग्निर्न दहेत् प्राणमयं हविरिति ।

धृतराष्ट्रः—

सक्रोधव्यवसायेन कृष्णेनैतदुदाहृतम् ।
पश्यामीव हि गाण्डीवी सर्वक्षत्रवधे धृतः ॥ ३७ ॥

---

$ धनूरेखान्तर्गत 'प्रियाख्यानमिदम्' इति वा 'प्रिय वाक्यमिदम्' इति वा पाठ्य भाति ।

* व्यसितः दुःखित. । तवेति भ्रातरि संबन्धनीयम् ।

**दुर्योधनः**— अहो हास्यमभिधानम् ।

**घटोत्कचः**— किमेतद्धास्यते ।

**दुर्योधनः**— एतद्धास्यते ।

देवैर्मन्त्रयते सार्धं स कृष्णो जातमत्सरः ।
पार्थेनैकेन यो वेत्ति निहतं राजमण्डलम् ॥ ३८ ॥

**घटोत्कचः**—

हसासि त्वमहं वक्ता प्रेषितश्चक्रपाणिना ।
श्रावितं पार्थकर्मेदमहो युक्तं तवैव तु ॥ ३९ ॥

अपिच, भवतापि श्रोतव्यो जनार्दनस्य सन्देशः ।

**दुःशासनः**— मा तावद् भोः! क्षत्रियावमानिन्!

पृथिव्यां शासनं यस्य धार्यते सर्वपार्थिवैः ।
सन्देशः श्रोष्यतेऽप्यन्यो नराङ्गस्तस्य सन्निधौ ॥ ४० ॥

**घटोत्कचः**— कथं कथम् । अराजा नाम भवतां चक्रायुधः । हं भोः!

मुक्ता येन (*चदा पुरा ?) नृपतयः प्रभ्रष्टमानोच्छ्रया
येना(धं?‡)नृपमण्डलस्य मिषतो भीष्माग्रहस्ताद् वृतम् ।

---

* अत्र 'जरापुरान्नृपतय' इति पठनीयं भाति । जरापुरं च जरासन्धनगरं स्यात् ।
‡ 'धं' इति पाठ्यं भाति । तथा च अर्धं पत्नी रुक्मिणीत्यर्थः । भीष्मशब्दश्च भीष्मकनामधेये रुक्मिणीपितरि वर्तते ।

श्रीर्यस्याभिरता नियोगसुमुखी श्री(वृक्ष?वत्स)शय्यागृहे
श्लाघ्यः पार्थिवपार्थिवस्तव कथं राजा न चक्रायुधः ॥ ४१ ।

दुर्योधनः — दुःशासन! अलमलं विवादेन ।

राजा वा यदि वाराजा बली वा यदि वाबली ।
बहुनात्र किमुक्तेन किमाह भवतां प्रभुः ॥ ४२ ॥

घटोत्कचः — अथकिम् अथकिम् । प्रभुरेव त्रैलोक्यनाथस्तत्रभवान् नारायणः, विशेषतोऽस्माकं प्रभुः । अपिच,

अवसितमवगच्छ क्षत्रियाणां विनाशं
नृपशतविनिचि(तया ?त्या)* लाघवं चास्तु भूमेः ।
न हि तनयविनाशादुद्यतोग्रास्त्रमु(ग्रे ?क्ते)ः
समरशिरसि कश्चित् फल्गुनस्यातिभारः ॥ ४३ ॥

शकुनिः —

यदि स्याद् वाक्यमात्रेण निर्जितेयं वसुन्धरा ।
वाक्ये वाक्ये यदि भवेत् सर्वक्षत्रवधः कृतः ॥ ४४ ॥

घटोत्कचः — रे रे! शकुनिरेष व्याहरति । भोः शकुने

अक्षान् विमुञ्च शकुने! कुरु बाणयोग्य-
मष्टापदं समरकर्मणि युक्तरूपम् ।

---

* विनिचितिर्विनिचयः ।

न ह्यत्र दारहरणं न च राज्यतन्त्रं
प्राणाः पणोऽत्र *रतिरुग्रफलाश्च बाणाः ॥ ४५ ॥

**दुःशासनः**—हेहेप्रयोगतः,†

क्षिपसि वदसि रूक्षं लङ्घयित्वा प्रमाणं
न च गणयसि किञ्चिद् व्याहरन् दीर्घहस्तः ।
यदि खलु तव दर्पो मातृपक्षोग्ररूपो
वयमपि खलु रौद्रा राक्षसोग्रस्वभावाः ॥ ४६ ॥

**घटोत्कचः**—शान्तं शान्तं पापम् । राक्षसेभ्योऽपि भवन्त एव क्रूरतमाः । कुतः,

न तु जतुगृहे सुप्तान् भ्रातॄन् दहन्ति निशाचराः
शिरसि न तथा भ्रातुः पत्नीं स्पृशन्ति निशाचराः ।
न च सुतवधं सङ्ख्ये वृत्तं स्मरन्ति निशाचरा
विकृतवपुषोऽ(पुत्रा?प्युग्रा)चारा घृणा न तु वर्जिता ॥ ४७ ॥

**दुर्योधनः**—

दूतः खलु भवान् प्राप्तो न त्वं युद्धार्थमागतः ।
गृहीत्वा गच्छ सन्देशं न वयं दूतघातकाः ॥ ४८ ॥

**घटोत्कचः**—किं किं दूत इति मां प्रधर्षयसि । मा तावद् भोः ! न दूतोऽहम् ।

---

* रतिः रतिहेतव इत्यर्थः । हेतुकार्ययोरभेदोपचार आयुर्घृतमितिवत् । † इदं 'रंरप्रयोगतः' इति पाठं भाति, 'रेरे' इति घटोत्कचेन प्राक्संबोधनकरणात् । 'हीनसंबोधने तु रे' इत्यमरः ।

अलं वो व्यवसायेन प्रहरध्वं समागताः ।
ज्याच्छेदाद् दुर्बलो नाहमभिमन्युरिह स्थितः ॥ ४९ ॥

महानेष कैशोरकोऽयं मे मनोरथः । अपिच,

दष्टोष्ठो मुष्टिमुद्यम्य तिष्ठत्येष घटोत्कचः ।
उत्तिष्ठतु पुमान् कश्चिद् गन्तुमि(च्छेद्?च्छन्)यमालयम् ॥ ५० ॥

**धृतराष्ट्रः**— पौत्र! घटोत्कच! मर्षयतु मर्षयतु भवान् । मद्वचना(व)गन्ता भव ।

**घटोत्कचः**— न शक्नोमि रोषं धारयितुम् । तथापि पितामहवचनाद् दूत एवास्मि । किमिति विज्ञाप्यस्तत्रभवान् नारायणः ।

**दुर्योधनः**— आः कस्य विज्ञाप्यम् । मद्वचनादेवं स वक्तव्यः,

किं व्यर्थं बहु भाषसे न खलु ते पौरु(ष?ष्य)साध्या वयं
दूरं नार्हति किञ्चिदेव वचनं युद्धं यदा दास्यति ।
निर्याम्येष निरन्तरं नृपशतच्छत्रावलीभिर्वृत-
स्तिष्ठ त्वं सह पाण्डवैः प्रतिवचो दास्यामि ते सायकैः॥५१॥

इति ।

**घटोत्कचः**— पितामह! एष गच्छामि ।

**धृतराष्ट्रः**— पौत्र! गच्छ गच्छ

घटोत्कचः—भो भो राजानः ! श्रूयतां जनार्दनस्य पश्चिमसन्देशः,

धर्मं समाचर (गु?कु)रु स्वजनव्यपेक्षां
　यत् काङ्क्षितं मनसि सर्वमिहानुतिष्ठ ।
ज्ञात्योपदेश इव पाण्डवरूपधारी
　सूर्यांशुभिः सममुपैष्यति वः कृतान्तः ॥ ५२ ॥

इति । *

(निष्क्रान्ताः सर्वे)

दूतघटोत्कचमवसितम् ।

---

शुभं भूयात् ।

---

* इह भरतवाक्यं न पठ्यते ।

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतं

# कर्णभारम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

नरमृगपतिवर्ष्मालोकनभ्रान्तनारी-
नरदनुजसुप(र्ण?र्व)व्रातपातालल्लोकः ।
करजकुलिशपालीभिन्नदैत्येन्द्रवक्षाः
सुररिपुबलहन्ता श्रीधरोऽस्तु श्रिये वः ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापन-व्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

भो भो! निवेद्यतां निवेद्यतां महाराजायाङ्गेश्वराय ।

**सूत्रधारः**— भवतु, विज्ञातम् ।

सङ्ग्रामे तुमुले जाते कर्णाय कलिताञ्जलिः ।
निवेदयति संभ्रान्तो भृत्यो दुर्योधनाज्ञया ॥ २ ॥

(निष्क्रान्तः)

प्रस्तावना ।

---

(ततः प्रविशति भटः)

**भटः** — भो भो! निवेद्यतां निवेद्यतां महाराजायाङ्गेश्व[1]-राय — युद्धकाल उपस्थित इति ।

करितुरगरथस्थैः पार्थकेतोः पुरस्ताद्
मुदितनृपतिसिंहैः सिंहनादः कृतोऽद्य ।
त्वरितमरिनिना(द?दै)र्दुःसहं लोकवीरः
समरम[2]धिगतार्थः प्रस्थितो नागकेतुः ॥ ३ ॥

([3]परिक्रम्यावलोक्य) अये एषोऽङ्गराजः समरपरिच्छदपरिवृतः शल्यराजसहितः स्वभवनान्निष्क्रम्येत एवाभिवर्तते । भोः! किन्नुखलु युद्धोत्सवप्रमुखस्य[†] दृष्टपराक्रमस्याभूतपूर्वो हृदयपरितापः । एष हि,

अत्युग्रदीप्तिविशदः समरेऽग्रगण्यः
शौर्ये च सम्प्रति सशो[5]कमुपैति धीमान् ।
प्राप्ते निदाघसमये घनराशिरुद्धः
सूर्यः स्वभावरुचिमानिव भाति कर्णः ॥ ४ ॥

यावदपसर्पामि । (निष्क्रान्तः)

---

१. 'ङ्गराजाय' क पाठः. २. 'भि' क. पाठः. ३. 'विलो' क. पाठः. ४. 'संता' क पाठः. ५ 'धीरमु' क पाठः.

---

† मुखं प्रगतः प्रमुखो मुख्यः ।

(ततः प्रविशति यथोक्तरूपः[1] कर्णः शल्यश्च)

**कर्णः —**

मा तावन्मम शरमार्गलक्ष्यभूताः
किं प्राप्ताः क्षितिपतयः सजीवशेषाः ।
कर्तव्यं रणशिरसि प्रियं कुरूणां
द्रष्टव्यो यदि स भवेद् धनञ्जयो मे ॥ ५ ॥

शल्यराज ! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः ।

**शल्यः —** बाढम् । (चोदयति)

**कर्णः —** अहोतुखलु,

अन्योन्यशस्त्रविनिपातनिकृत्तगात्र-
यौधाश्ववारणरथेषु महाहवेषु ।
क्रुद्धान्तकप्रतिमविक्रमिणो ममापि
वैधुर्यमापतति चेतसि युद्धकाले ॥ ६ ॥

*भोः ! कष्टम् ।

पूर्वं कुन्त्यां समुत्पन्नो राधेय इति विश्रुतः ।
युधिष्ठिरादयस्ते मे यवीयांसस्तु पाण्डवाः ॥ ७ ॥

---

१. 'थानिर्दिष्टः क' ख. पाठ.. २. 'श्च' ख. पाठ'.

---

* 'भोः' इत्यतः प्राक् 'स्वगतम्' इत्यपेक्षित भाति ।

अयं स कालः क्रमलब्धशोभनो
*गुणप्रकर्षो दिवसोऽयमागतः ।
निरर्थमस्त्रं च मया हि शिक्षितं
पुनश्च मातुर्वचनेन वारितः ॥ ८ ॥

§भो मद्रराज! श्रूयतां ममास्त्रस्य वृत्तान्तः ।

शल्यः— ममाप्यस्ति कौतूहलमेनं वृत्तान्तं श्रोतुम् ।

कर्णः— पूर्वमेव चाहं जामदग्न्यस्य सकाशं गतवानस्मि ।

शल्यः— ततस्ततः ।

कर्णः— ततः[2],

विद्युल्लताकपिलतुङ्गजटाकलाप-
मुद्यत्प्रभावलयिनं परशुं दधानम् ।
क्षत्रान्तकं मुनिवरं भृगुवंशकेतुं
गत्वा प्रणम्य निकटे निभृतः स्थितोऽस्मि ॥ ९ ॥

शल्यः— ततस्ततः ।

कर्णः— ततस्तेन जामद(ग्निनाऽग्न्येन) ममाशीर्वचनं दत्त्व
पृष्टोऽस्मि—को भवान्, किमर्थमिहागत इति[4] ।

---

१. 'शल्यरा' ख. पाठः. २. 'तस्त भगवन्तं प्रणम्य कृताञ्जलिः स्थितोऽस्मि । तत वि' ख. पाठः. ३. 'त्वा को' ख. पाठः. ४. 'त्युक्तः ।' ख. पाठः.

---

* गुणप्रकर्षो गुणवत्तर इत्यर्थः । § इह 'प्रकाशम्' इत्यपेक्षितं भाति ।

शल्यः— ततस्ततः ।

कर्णः— भगवन् ! अखिलान्यस्त्राण्युपशिक्षितुमिच्छामी-त्युक्तवानस्मि ।

शल्यः— ततस्ततः ।

कर्णः— तत उक्तोऽहं भगवता— ब्राह्मणेषूपदेशं करिष्यामि, न क्षत्रियाणामिति ।

शल्यः— अस्ति खलु भगवतः क्षत्रियवंश्यैः पूर्ववैरम् । ततस्ततः ।

कर्णः— ततो नाहं क्षत्रिय इत्यस्त्रोपदेशं ग्रहीतुमारब्धः ।

शल्यः— ततस्ततः ।

कर्णः— ततः कतिपयकालातिक्रमे[2] कदाचित् फलमूलसत्कुशकुसुमाहरणाय गतवता गुरुणा सहानुगतोऽस्मि । ततः गुरुर्वनभ्रमणपरिश्रमान्मदङ्के निद्रावशमुपगतः ।

शल्यः— ततस्ततः ।

कर्णः— ततः,

वृत्ते वज्रमुखेन नाम कृमिणा दैवान्ममोरुद्वये
निद्राच्छेदभयादसह्यत गुरोर्धैर्यात् तदा वेदना ।

---

१. 'नि' ख. पाठः. २. 'दिवसाति' ख. पाठः.

उत्थाय क्षतजाप्लुतः स सहसा रोषानलोद्दीपितो

बुद्ध्वा मां च शशाप कालविफलान्यस्त्राणि ते सन्त्विति ॥१०॥

शल्यः— अहो कष्टमभिहितं तत्रभवता ।

कर्णः— परीक्षामहे तावदस्त्रस्य वृत्तान्तम् । (तथा कृत्वा) एता-न्यस्त्राणि निर्वीर्याणीव लक्ष्यन्ते । अपिच,

इमे हि दैन्येन निमीलितेक्षणा

मुहुः स्खलन्तो विवशास्तुरङ्गमाः ।

गजाश्च सप्तच्छददानगन्धिनो

निवेदयन्तीव रणे निवर्तनम् ॥ ११ ॥

शङ्खदुन्दुभयश्च निःशब्दाः ।

शल्यः— भोः ! कष्टं खल्विदम् ।

कर्णः— शल्यराज ! अलमलं विषादेन ।

हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः ।

उभे बहुमते लोके नास्ति निष्फलता रणे ॥ १२ ॥

अपिच,

इमे हि युद्धेष्वनिवर्तिताशा

हयाः सुपर्णेन समानवेगाः ।

---

१ 'जोक्षितः' ख पाठः. २. 'पि' ख. पाठः.

श्रीमत्सु काम्बोजकुलेषु जाता
रक्षन्त्यमी[1] यद्यपि रक्षितव्यम् ॥ १३ ॥

अक्षयोऽस्तु गोब्राह्मणानाम् । अक्षयोऽस्तु पतिव्रतानाम् । अक्षयोऽस्तु[2] रणेष्वपराङ्मुखानां यौधपुरुषाणाम् । अक्षयोऽस्तु मम प्राप्तकालस्य । एष भोः, प्रसन्नोऽस्मि[3]† ।

समरमुखमसह्यं पाण्डवानां प्रविश्य
प्रथितगुणगणाढ्यं धर्मराजं च बद्ध्वा ।
मम शरवरवेगैरर्जुनं पातयित्वा
वनमिव हतसिंहं सुप्रवेशं करोमि ॥ १४ ॥

शल्यराज ! यावद् रथमारोहावः ।

**शल्यः** — बाढम् ।

(उभौ रथारोहणं नाटयतः)

**कर्णः** — शल्यराज ! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः ।

(नेपथ्ये)

(क) भो कण्ण ! महत्तरं भिक्खं याचेमि ।

---

(क) भोः कर्ण ! महत्तरां भिक्षां याचे ।

---

१. 'न्तु मां य' क. पाठः. २. 'स्त्वप' क. पाठः. ३. 'भोः, स' क. पाठः.

---

† एतदनन्तरम् 'अये शब्द इव' इति, 'शङ्खध्वनिः प्रलयसागरघोषतुल्यः' इत्यादि (श्लो. २४) पद्यं चाधिकं ख. पुस्तके पठ्यते ।

**कर्णः**—(आकर्ण्य) अये वीर्यवान् शब्दः ।

श्रीमानेव न केवलं द्विजवरो यस्मात् प्रभावो महा-
नाकर्ण्य स्वरमस्य धीरमधुरं चित्रार्पिताङ्गा इव ।
उत्कर्णस्तिमिताञ्चिता(क्षि?क्ष)वलितग्रीवार्पिताग्रानना-
स्तिष्ठन्त्यस्ववशाङ्गयष्टि सहसा यान्तो ममैते हयाः ॥१५॥

आहूयतां स विप्रः । न न । अहमेवाह्वयामि । भगवन्! इत इतः ।

(ततः प्रविशति ब्राह्मणरूपेण शक्रः)

**शक्रः**—*भो मेघाः! सूर्येणैव निवर्त्य गच्छन्तु भवन्तः । (कर्णमुपगम्य) (क) भो कण्ण! महत्तरं भिक्खं याचेमि ।

**कर्णः**—दृढं प्रीतोऽस्मि भगवन्!

यातः कृतार्थगणनामहमद्य लोके
राजेन्द्रमौलिमणिरञ्जितपादपद्मः ।
विप्रेन्द्रपादरजसा तु पवित्रमौलिः
कर्णो भवन्तमहमेष नमस्करोमि ॥ १६ ॥

**शक्रः**—(आत्मगतम्) किन्नुखलु मया वक्तव्यम् । यदि दीर्घायुर्भवेति वक्ष्ये, दीर्घायुर्भविष्यति । यदि न वक्ष्ये, मूढ इति मां

---

(क) भोः कर्ण! महत्तरां भिक्षां याचे ।

---

* स्ववाहनभूतान् मेघानादिशति — भो इत्यादिना ।

परिभवति । तस्मादुभयं परिहृत्य किन्नुखलु वक्ष्यामि । भवतु, दृष्टम् । (प्रकाशम्) (क) भो कण्ण! सुय्ये विअ, चन्दे विअ, हिमवन्ते विअ, साअले विअ, चिट्ठदु दे जसो ।

**कर्णः**—भगवन्! किं न वक्तव्यं दीर्घायुर्भवेति । अथवा एतदेव शोभनम् । कुतः,

> धर्मो हि यत्नैः पुरुषेण साध्यो
> भुजङ्गजिह्वाचपला नृपश्रियः[1] ।
> तस्मात् प्रजापालनमात्रबुद्ध्या[2]
> हतेषु देहेषु गुणा *धरन्ते ॥ १७ ॥

भगवन्! किमिच्छसि, किमहं ददामि ।

**शक्रः**—(ख) महत्तरं भिक्खं याचेमि ।

**कर्णः**—महत्तरां भिक्षां भवते प्रदास्ये । श्रूयन्तां मद्विभवाः,

> गुणवदमृतकल्पक्षीरधाराभिवर्षि
> द्विजवर! रुचितं ते तृप्तवत्सानुयातम्[3] ।

---

(क) भोः कर्ण! सूर्य इव, चन्द्र इव, हिमवानिव, सागर इव, तिष्ठतु ते यशः ।

(ख) महत्तरां भिक्षां याचे ।

---

१. 'अ' ख. पाठः. २. 'मत्र बुद्ध्वा ह' ख. पाठः. ३. 'या' ख. पाठः.

---

* सन्तीत्यर्थः । प्रजापालनरूप धर्ममवेक्ष्यैव गुणवत्ता देहानां, स्वभावात्तु ते गर्हिता इति तात्पर्यम् ।

तरुणमधिकमर्थिप्रार्थनीयं पवित्रं
विहितकनकश्रृङ्गं गोसहस्रं ददामि ॥ १८ ॥

शक्रः—(क) गोसहस्सं त्ति । मुहुत्तअं खिरं पिबामि । णेच्छामि कण्ण! णेच्छामि ।

कर्णः—किं नेच्छति भगवान् । इदमपि श्रूयतां,

रवितुरगसमानं साधनं राजलक्ष्म्याः
सकलनृपतिमान्यं मान्यकाम्बोजजातम् ।
सुगुणमनिलवेगं युद्धदृष्टापदानं
सपदि बहुसहस्रं वाजिनां ते ददामि ॥ १९ ॥

शक्रः—(ख) अस्स त्ति । मुहुत्तअं आळुहामि । णेच्छामि कण्ण! णेच्छामि ।

कर्णः—किं नेच्छति भगवान् । अन्यदपि श्रूयतां,

§मदसरितकपोलं षट्पदैः सेव्यमानं
गिरिवरनिचयाभं मेघगम्भीरघोषम् ।
सितनखदशनानां वारणानामनेकं
रिपुसमरविमर्दं वृन्दमेतद् ददामि ॥ २० ॥

---

(क) गोसहस्रमिति । मुहूर्तकं क्षीरं पिबामि । नेच्छामि कर्ण! नेच्छामि ।
(ख) अश्व इति । मुहूर्तकमारोहामि । नेच्छामि कर्ण! नेच्छामि ।

---

१. 'प्र' ख. पाठः.

---

§ मदेन मदजलेन सरितौ सञ्जातसरौ रेखिताविल्यर्थः, कपोलौ यस्य तत् तथाभूतम् ।

शक्रः—(क) गअ त्ति । मुहुत्तअं आलुहामि[1] । णेच्छामि कण्ण! णेच्छामि ।

कर्णः— किं नेच्छति भगवान्[2] । अन्यदपि श्रूयताम् । अपर्याप्तं कनकं ददामि ।

शक्रः— (ख) गह्णिअ गच्छामि । (किञ्चिद् गत्वा) णेच्छामि कण्ण! णेच्छामि ।

कर्णः—तेन हि जित्वा पृथिवीं ददामि ।

शक्रः—(ग) पुहुवीए किं करिस्सं ।

कर्णः—तेन ह्यग्निष्टोमफलं ददामि ।

शक्रः—( ) अग्गिट्ठोमफळेण[3] किं कय्यं ।

कर्णः—तेन हि मच्छिरो ददामि ।

शक्रः—अविहा अविहा ।

---

(क) गज इति। मुहूर्तकमारोहामि । नेच्छामि कर्ण! नेच्छामि ।

(ख) गृहीत्वा गच्छामि । नेच्छामि कर्ण! नेच्छामि ।

(ग) पृथिव्या किं करिष्यामि ।

(घ) अग्निष्टोमफलेन किं कार्यम् ।

---

१. 'मि । (आरुह्यावलोक्य) णे' क. पाठः. २. 'न् । ते' क. पाठः. ३. 'तेण' क. पाठः.

**कर्णः**— न भेतव्यं न भेतव्यम् । प्रसीदतु भगवान्[1] । अन्यदपि श्रूयताम् ।

अङ्गैः सहैव जनितं[2] मम देहरक्षा[3]
देवासुरैरपि न भेद्यमिदं सहास्त्रैः ।
देयं तथापि कवचं सह कुण्डलाभ्यां
प्रीत्या मया भगवतो रुचितं यदि स्यात् ॥ २१ ॥

**शक्रः**— (सहर्षम्) (क) देदु देदु ।

**कर्णः**— (आत्मगतम्) एष एवास्य कामः । किन्नुखल्वनेककपटबुद्धेः कृष्णस्योपायः । सोऽपि च भवतु । धिगयुक्तमनुशोचितुम् । नास्ति संशयः । (प्रकाशम्) गृह्यताम् ।

**शल्यः**— अङ्गराज ! न दातव्यं न दातव्यम् ।

**कर्णः**— शल्यराज ! अलमलं वारयितुम् । पश्य,

शिक्षा क्षयं गच्छति कालपर्ययात्[4]
सुबद्धमूला निपतन्ति पादपाः ।
जलं जलस्थानगतं च शुष्यति
हुतं च दत्तं च तथैव तिष्ठति ॥ २२ ॥

---

(क) ददातु ददातु ।

---

१. 'न् । अपर्याप्त कनक ददामि । शक्रः— आणीअ गच्छामि । णेच्छामि कण्ण । णेच्छामि । कर्णः— अ' क. पाठः. २ 'तौ' क. पाठ., ३. 'क्षौ' क. पाठः. ४. 'ये' ख. पाठः.

तस्माद् गृह्यताम् । (निष्क्रम्य ददाति)

**शक्रः** — (गृहीत्वा आत्मगतम्) गृहीते एते । पूर्वमेवा(हम ?)-र्जुनविजयार्थं सर्वदेवैर्यत्[1] समर्थितं, तदिदानीं मयानुष्ठितम् । तस्मादहमप्यैरावतमारुह्यार्जुन[2]कर्णयोर्युद्धविशेषं पश्यामि । (निष्क्रान्तः)

**शल्यः** — अङ्गराज! वञ्चितः[3] खलु भवान् ।

**कर्णः** — केन ।

**शल्यः** — शक्रेण ।

**कर्णः** — न खलु । शक्रः खलु मया वञ्चितः । कुतः,

अनेकयज्ञाहुतितर्पितो द्विजैः
　§किरीटिमान् दानवसङ्घमर्दनः ।
सुरद्विपास्फालनकर्कशाङ्गुलि-
　र्मया[4] कृतार्थः खलु पाकशासनः ॥ २३ ॥

(प्रविश्य ब्राह्मणरूपेण)

**देवदूतः** — भोः कर्ण! कवचकुण्डलग्रहणपश्चात्तापेन पुर-

---

१. 'मैया समर्थितमिदमनु' क. पाठः. २. 'ह्य मत्पुत्रयोरर्जुन +++द्वन्द्वयुद्ध प' क. पाठः. ३. 'तो भ' क. पाठः. ४. 'णात् प' ख. पाठः.

---

§ किरीटिमान् अर्जुनवान् । किरीटिना स्वात्मजेनापि शक्रो न कृतार्थः, किन्तु मयैव कृतार्थ इति विशेषं ध्वनयितुमिदं विशेषणम् ।

न्द्रेणानुगृहीतोऽसि । पाण्डवेष्वेकपुरुषवधार्थममोघमस्त्रं विमला नाम शक्तिरियं गृह्यताम् ।

कर्णः—धिग्, दत्तस्य न प्रतिगृह्णामि ।

देवदूतः[1]—ननु ब्राह्मणवचनाद् गृह्यताम् ।

कर्णः—ब्राह्मणवचनमिति । न मयातिक्रान्तपूर्वम् । कदा लभेय ।

देवदूतः[2]—यदा स्मरसि तदा लभस्व ।

कर्णः—बाढम् । अनुगृहीतोऽस्मि । प्रतिनिवर्ततां भवान् ।

देवदूतः[3]—बाढम् । (निष्क्रान्तः)

कर्णः—शल्यराज! यावद् रथमारोहावः[4] ।

शल्यः—बाढम् ।

(रथारोहणं[5] नाटयतः)

कर्णः—अये शब्द इव श्रूयते । किन्नुखल्विदम् ।

शङ्खध्वनिः प्रलयसागरघोषतुल्यः[6]
कृष्णस्य वा न तु भवेत् स तु फल्गुनस्य ।
नूनं युधिष्ठिरपराजयकोपितात्मा
पार्थः करिष्यति यथाबलमद्य युद्धम् ॥ २४ ॥

---

१. 'ब्राह्मणः— न न, ब्रा' क. पाठः. २. 'ब्राह्मणः—' क. पाठः. ३. 'ब्राह्मणः—' क. पाठः. ४. 'ह्यावः' क. पाठः. ५. 'आरुह्य)' क. पाठः. ६. 'तुल्य-घोषः कृ' क. पाठः.

शल्यराज! यत्रासावर्जुनः, तत्रैव चोद्यतां मम रथः।

**शल्यः —** बाढम्।

(भरतवाक्यम्)

§सर्वत्र सम्पदः सन्तु नश्यन्तु विपदः सदा।
राजा राजगुणोपेतो भूमिमेकः प्रशास्तु नः॥ २५॥

(निष्क्रान्तौ)

**कर्णभारमवसितम्[1]।**

---

शुभं भूयात्।

---

१. 'कवचाङ्कं समाप्तम्।' ख. पाठः.

§ क. पुस्तके भरतवाक्यं नास्ति।

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतम्

# ऊरुभङ्गम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

भीष्मद्रोणतटां जयद्रथजलां गान्धारराजह्रदां
कर्णद्रौणिकृपोर्मिनक्रमकरां दुर्योधनस्रोतसम् ।
तीर्णः शत्रुनदीं शरासिकतां येन प्लवेनार्जुनः
शत्रूणां तरणेषु वः स भगवानस्तु प्लवः केशवः ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

(नेपथ्ये)

एते स्मो भोः ! एते स्मः ।

**सूत्रधारः**—भवतु, विज्ञातम् ।

(प्रविश्य)

**पारिपार्श्वकः**—भाव ! कुतोनुखल्वेते,

स्वर्गार्थमाहवमुखोद्यतगात्रहोमा
नाराचतोमरशतैर्विषमीकृताङ्गाः ।
मत्तद्विपेन्द्रदशनोल्लिखितैः शरीरै-
रन्योन्यवीर्यनिकषाः पुरुषा भ्रमन्ति ॥ २ ॥

**सूत्रधारः**—मा(षि ? रिष!) किं नावगच्छसि । तनयशततनयशून्ये दुर्योधनावशेषे धृतराष्ट्रपक्षे, पाण्डवजनार्दनावशिष्टे युधिष्ठिरपक्षे, राज्ञां शरीरसमाकीर्णे समन्तपञ्चके,

एतद् रणाहतगजाश्वनरेन्द्रयौधं
सङ्कीर्णलेख्यमिव चित्रपटं प्रविद्धम् ।
युद्धे वृकोदरसुयोधनयोः प्रवृत्ते
यौधा नरेन्द्रनिधनैकगृहं प्रविष्टाः ॥ ३ ॥

(निष्क्रान्तौ)

स्थापना ।

---

(ततः प्रविशन्ति भटास्त्रयः)

**सर्वे**—एते स्मो भोः ! एते स्मः ।

**प्रथमः**—

वैरस्याक(त?थ)नं बलस्य निकषं मानप्रतिष्ठागृहं
युद्धेष्वप्सरसां स्वयंवरसभां शौर्यप्रतिष्ठां नृणाम् ।
राज्ञां पश्चिमकालवीरशयनं प्राणाग्निहोमक्रतुं
सम्प्राप्ता रणसंज्ञमाश्रमपदं राज्ञां नभःसङ्क्रमम् ॥ ४ ॥

**द्वितीयः**—सम्यग् भवानाह।

उपलविषमा नागेन्द्राणां शरीरधराधरा
  दिशि दिशि कृता गृध्रावासा हतातिरथा रथाः।
अवनिपतयः स्वर्गं प्राप्ताः क्रियामरणे रणे
  प्रतिमुखमिमे तत्तत् कृत्वा चिरं निहताहताः॥ ५॥

**तृतीयः**—एवमेतत्।

करिवरकरयूपो बाणविन्यस्तदर्भो
  हतगजचयनोच्चो वैरवह्निप्रदीप्तः।
ध्वजविततविमानः सिंहनादोच्चमन्त्रः
  पतितपशुमनुष्यः संस्थितो युद्धयज्ञः॥ ६॥

**प्रथमः**—इदमपरं पश्येतां भवन्तौ।

एते परस्परशरैर्हतजीवितानां
  देहै रणाजिरमहीं समुपाश्रितानाम्।
कुर्वन्ति चात्र पिशितार्द्रमुखा विहङ्गा
  राज्ञां शरीरशिथिलानि विभूषणानि॥ ७॥

**द्वितीयः**—

प्रसक्तनाराचनिपातपातितः
  समग्रयुद्धोद्यतकल्पितो गजः।
विशीर्णवर्मा सशरः सकार्मुको
  नृपायुधागारमिवावसीदति॥ ८॥

तृतीयः—इदमपरं पश्येतां भवन्तौ ।

माल्यैर्ध्वजाग्रपतितैः कृतमुण्डमालं
　र(त्नै?ल्यै)कसायक(व?ध)रं रथिनं विपन्नम् ।
जामातरं प्रवहणादिव बन्धुनार्यो
　हृष्टाः शिवा रथमुखादवतारयन्ति ॥ ९ ॥

सर्वे—अहोतुखलु निहतपातितगजतुरगनररुधिरकालिल-भूमिप्रदेशस्य विक्षिप्तवर्मचर्मातपत्रचामरतोमरशरकुन्तकवचक-(ब)न्धादिपर्याकुलस्य शक्तिप्रासहाटकभिण्डिपालशूलमुसलमुद्र-रवराहकर्णकणयकर्पणशङ्कुत्रासिगदादिभिरायुधैराकीर्णस्य सम-न्तपञ्चकस्य प्रतिभयता।

प्रथमः—इह हि,

रुधिरसरितो निस्तीर्यन्ते हतद्विपसङ्क्रमा
　नृपतिरहितैः स्रस्तैः सूतैर्वहन्ति रथान् हयाः ।
पतितशिरसः पूर्वाभ्यासाद् द्रवन्ति कबन्धकाः
　पुरुषरहिता मत्ता नागा भ्रमन्ति यतस्ततः ॥ १० ॥

द्वितीयः—इदमपरं पश्येतां भवन्तौ । एते,

गृध्रा मधूकमुकुलोन्नतपिङ्गलाक्षा
　दैत्येन्द्रकुञ्जरनताङ्कुशतीक्ष्णतुण्डाः ।
भान्त्यम्बरे विततलम्बविकीर्णपक्षा
　मांसैः प्रवालरचिता इव तालवृन्ताः ॥ ११ ॥

तृतीयः —

एषा निरस्तहयनागनरेन्द्रयौधा
व्यक्तीकृता दिनकरोग्रकरैः समन्तात् ।
नाराचकुन्तशरतोमरखड्गकीर्णा
तारागणं पतितमुद्वहतीव भूमिः ॥ १२ ॥

प्रथमः — ईदृश्यामप्यवस्थायामविमुक्तशोभा विराजन्ते क्षत्रियाः । इह हि,

(सत्रो?)*र्वार्तितनेत्रषट्पदगणा ताम्रोष्ठपत्रोत्करा
भ्रूभेदाञ्चितकेसरा स्वमकुटव्याविद्धसंवर्तिका ।
वीर्यादित्यविबोधिता रणमुखे नाराचनालोन्नता
निष्कम्पा स्थलपद्मिनीव रचिता राज्ञामभीतैर्मुखैः ॥१३॥

द्वितीयः — ईदृशानामपि क्षत्रियाणां मृत्युः प्रभवति । न शक्यं खलु विषमस्थैः पुरुषै राजबला(दा?धा)नं कर्तुम् ।

तृतीयः — किं(चि?च)रे(भ?) प्रभवति क्षत्रियाणामिति ।

प्रथमः — कः संशयः ।

‡द्वितीयः — मा मा भवानेवम् ।

स्पृष्ट्वा खाण्डवधूमरञ्जितगुणं संशप्तकोत्सादनं
स्वर्गाक्रन्दहरं निवातकवचप्राणोपहारं धनुः ।

---

* 'सिप्रो' इति स्यात् । 'सिप्रो निदाघसलिले' इति मेदिनी । ‡ 'तृतीय' इति स्यात् ।

पार्थेना(ञ्र?द्य) बलान्महेश्वररणक्षेपावशिष्टैः शरै-
दर्पोत्सिक्तवशा नृपा रणमुखे मृत्योः*प्रतिग्राहिताः ॥१४॥

**सर्वे** — अये शब्दः ।

किं मेघा निनदन्ति वज्रपतनैश्चूर्णीकृताः पर्वता
निर्घातैस्तुमुलस्वनप्रतिभयैः किं दार्यते वा मही ।
किं मुञ्चत्यनिलावधूतचपलक्षुब्धोर्मिमालाकुलं
शब्दं मन्दरकन्दरोदरदरीः संहृत्य वा सागरः ॥१५॥

भवतु , पश्यामस्तावत् ।

(सर्वे परिक्रामन्ति)

**प्रथमः** — अये एतत् खलु द्रौपदीकेशधर्षणावमर्षितस्य पाण्डवमध्यमस्य भीमसेनस्य भ्रातृशतवधक्रुद्धस्य महाराजदुर्योधनस्य च द्वैपायनहलायुधकृष्णविदुरप्रमुखानां कुरुयदुकुलदैवतानां प्रत्यक्षं प्रवृत्तं गदायुद्धम् ।

**द्वितीयः** —

भीमस्योरसि (तप्त)काञ्चनशिलापीने प्रतिस्फालिते
भिन्ने वासवहस्तिहस्तकठिने दुर्योधनांसस्थले ।
अन्योन्यस्य भुजद्वयान्तरतटेष्वासज्यमानायुधे
यस्मिंश्चण्डगदाभिघातजनितः शब्दः समुत्तिष्ठति ॥१६॥

---

६ * प्रतिग्रहं प्रति कर्तुर्मृत्योरिह शेषत्वविवक्षणात् षष्ठी ।

**तृतीयः**—एष महाराजः,

शिष्टोत्कम्पनवल्गमान[†]मकुटः क्रोधाधिकाक्षाननः
  स्थानाक्रामणवामनीकृततनुः प्रत्यग्रहस्तोच्छ्रयः ।
यस्यैषा रिपुशोणितार्द्रकलिला भात्यग्रहस्ते गदा
  कैलासस्य गिरेरि(वोग्रचरिताद्धोता?)[‡] महेन्द्राश(पि?नि:)॥१७॥

**प्रथमः**—एष सम्प्रहाररुधिरसिक्ताङ्गस्तावद् दृश्यतां पाण्डवः ।

निर्भिन्नाग्रललाटवान्तरुधिरो भग्नांसकूटद्वयः
  सान्द्रैर्निर्गलितप्रहाररुधिरैरार्द्रीकृतोरःस्थलः ।
भीमो भाति गदाभिघातरुधिरक्लिन्नावगाढव्रणः
  शैलो मेरुरिवैष धातुसलिलासारोपदिग्धोपलः ॥ १८ ॥

**द्वितीयः**—

भीमां गदां क्षिपति गर्जति वल्गमानः
  शीघ्रं भुजं हरति तस्य कृतं भिनत्ति ।
चारीं गतिं प्रचरति प्रहरत्यभीक्ष्णं
  संशिक्षितो नरपतिर्बलवांस्तु भीमः ॥ १९ ॥

---

† वल्गमानेति चानशन्तं बोध्यम् ।  ‡ 'वाग्रशिखरोद्धूता' इति पाठ्यं भाति ।

**तृतीयः**—एष वृकोदरः,

शिरसि गुरुनिखातस्रस्तरक्तार्द्रगात्रो
धरणिधरनिकाशः संयुगेष्वप्रमेयः ।
प्रविशति गिरिराजो मेदिनीं वज्रदग्धः
शिथिलविसृतधातुर्हेमकूटो यथाद्रिः ॥ २० ॥

एष गाढप्रहारशिथिलीकृताङ्गं निपतन्तं भीमसेनं दृष्ट्वा,
एकाग्राङ्गुलिधारितोन्नतमुखो व्यासः स्थितो विस्मितः

**द्वितीयः**—

दैन्यं याति युधिष्ठिरोऽत्र विदुरो बाष्पाकुलाक्षः स्थितः ।

**तृतीयः**—

स्पृष्टं गाण्डिवमर्जुनेन गगनं कृष्णः समुद्वीक्षते

**सर्वे**—

शिष्यप्रीतितया हलं भ्रमयते रामो रणप्रेक्षकः ॥ २१ ॥

**प्रथमः**—एष महाराजः,

वीर्यालयो विविधरत्नविचित्रमौलि-
र्युक्तोऽभिमानविनयद्युतिसाहसैश्च ।
वाक्यं वदत्युपहसन्न तु भीम! दीनं
वीरो निहन्ति समरेषु भयं त्यजेति ॥ २२ ॥

**द्वितीयः**—एष इदानीमपहास्यमानं भीमसेनं दृष्ट्वा स्वमूरुमभिहत्य कामपि संज्ञां प्रयच्छति जनार्दनः ।

**तृतीयः**—एष संज्ञया समाश्वासितो मारुतिः,

संहृत्य भ्रुकुटी ललाटविवरे स्वेदं करेणाक्षिपन्
बाहुभ्यां प्रतिगृह्य भीमवदनश्चित्राङ्गदां स्वां गदाम् ।
पुत्रं दीनमुदीक्ष्य *सर्वगतिना लब्ध्वेव दत्तं बलं
गर्जन् सिंहवृषेक्षणः क्षितितलाद् भूयः समुत्तिष्ठति ॥ २३ ॥

**प्रथमः**—हन्त पुनः प्रवृत्तं गदायुद्धम् । अनेन हि,

भूमौ पाणितले निघृष्य तरसा बाहू प्रमृज्याधिकं
सन्दष्टोष्ठपुटेन विक्रमबलात् क्रोधाधिकं गर्जता ।
त्यक्त्वा धर्मघृणां विहाय समयं कृष्णस्य संज्ञासमं
गान्धारीतनयस्य पाण्डुतनयेनोर्वोर्विमुक्ता गदा ॥ २४ ॥

**सर्वे**—हा धिक् पतितो महाराजः ।

**तृतीयः**—एष रुधिरपतनद्योतिताङ्गं निपतन्तं कुरुराजं दृष्ट्वा खमुत्पतितो भगवान् द्वैपायनः । (य एषः?)§

हेलासंवृतलोचनेन हलिना नेत्रोपरोधः कृतो
दृष्ट्वा क्रोधनिमीलितं हलधरं दुर्योधनापेक्षया ।
सम्भ्रान्तैः करपञ्जरान्तरगतो द्वैपायनज्ञापितो
भीमः कृष्णकरावलम्बितगतिर्निर्वाह्यते पाण्डवैः ॥ २५ ॥

**प्रथमः**—अये अयमप्यमर्षोन्मीलित(रभसं?)लोचनो भीम-

---

* सर्वगतिना वायुना । § 'द्वितीयः—' इति स्यात् ।

सेनापक्रमणमुद्वीक्षमाण इत एवाभिवर्तते भगवान् हलायुधः। य एषः,

प्रचलललितमौलिः क्रोधताम्रायताक्षो
भ्रमरमुखविदष्टां किञ्चिदुत्कृष्य मालाम् ।
असिततनुविलम्बिस्रस्तवस्त्रानुकर्षी
क्षितितलमवतीर्णः पारिवेषीव‡ चन्द्रः ॥ २६ ॥

द्वितीयः — तदागम्यतां वयमपि तावन्महाराजस्य प्रत्यनन्तरीभवामः।

उभौ — बाढम्। प्रथमः कल्पः ।

(निष्क्रान्ताः)

विष्कम्भकः ।

---

(ततः प्रविशति बलदेवः)

बलदेवः — भो भोः पार्थिवाः! न युक्तमिदम् ।

मम रिपुबलकालं लाङ्गलं लङ्घयित्वा
रणगतमतिसन्धि मां च नावेक्ष्य दर्पात् ।
रणशिरसि गदां तां तेन दुर्योधनोर्वोः
कुलविनयसमृद्ध्या *पातितः पातयित्वा ॥ २७ ॥

भो दुर्योधन! मुहूर्तं तावदात्मा धार्यताम् ।

---

‡ परिवेष एव पारिवेषः । स्वार्थेऽण् । तद्वान् पारिवेषी । * पातित इत्यर्थाद् दुर्योधनः ।

सौभोच्छिष्टमुखं महासुरपुरप्राकारकूटाङ्कुशं
कालिन्दीजलदेशिकं रिपुबलप्राणोपहारार्चितम् ।
हन्तोत्क्षि(प्त?प्य)हलं करोमि रुधिरस्वेदार्द्रपाकोत्त(रं?रे)
भीमस्योरसि यावदद्य विपुले केदारमार्गाकुलम्* ॥ २८ ॥

(नेपथ्ये)

प्रसीदतु प्रसीदतु भगवान् हलायुधः ।

**बलदेवः**—एवंगतोऽप्यनुगच्छति मां तपस्वी दुर्योधनः । एषः,

श्रीमान् संयुगचन्दनेन रुधिरेणार्द्रानुलिप्तच्छवि-
र्भूसंसर्पणरेणुपाटलभुजो बालव्रतं ग्राहितः ।
निर्वृत्तेऽमृतमन्थने क्षितिधरान्मुक्तः सुरैः सासुरै-
राकर्षन्निव भोगमर्णवजले श्रान्तोज्झितो वासुकिः ॥२९॥

(ततः प्रविशति भग्नोरुयुगलो दुर्योधनः)

**दुर्योधनः**—एष भोः !

भीमेन भित्त्वा समयव्यवस्थां
गदानिपातक्षतजर्जरोरुः ।
भूमौ भुजाभ्यां परि(कर्ष?कृष्य)माणं
स्वं देहमर्धोपरतं वहामि ॥ ३० ॥

---

* केदारमार्गे आकुल व्यापारव्यग्रम । उरोरूपेऽधिकरणे केदारमार्गव्यापारोक्त्या उरसः केदाराभेदोऽर्थसिद्धः ।

प्रसीदतु प्रसीदतु भगवान् हलायुधः ।

त्वत्पादयोर्निपतितं पतितस्य भूमा-
वेतच्छिरः प्रथममद्य विमुञ्च रोषम् ।
जीवन्तु ते कुरुकुलस्य निवापमेघा
वैरं च विग्रहकथा च वयं च नष्टाः ॥ ३१ ॥

**बलदेवः**—भो दुर्योधन! मुहूर्तं तावदात्मा धार्यताम् ।

**दुर्योधनः**—किं भवान् करिष्यति ।

**बलदेवः**—श्रूयताम्,

आक्षिप्तलाङ्गलमुखोल्लिखितैः शरीरै-
र्निर्दारितांसहृदयान्मुसलप्रहारैः ।
दास्यामि संयुगहतान् सरथाश्वनागान्
स्वर्गानुयात्रपुरुषांस्तव पाण्डुपुत्रान् ॥ ३२ ॥

**दुर्योधनः**— मा मा भवानेवम् ।

प्रतिज्ञावसिते भीमे गते भ्रातृशते दिवम् ।
मयि चैवं गते राम! विग्रहः किं करिष्यति ॥ ३३ ॥

**बलदेवः**—(त?म)त्प्रत्यक्षं वञ्चितो भवानित्युत्पन्नो मे रोषः ।

**दुर्योधनः**—वञ्चित इति मां भवान् मन्यते ।

**बलदेवः**—कः संशयः ।

**दुर्योधनः**—हन्त भोः! दत्तमूल्या इव मे प्राणाः । कुतः,

आदीप्तानलदारुणाज्जतुगृहाद् बुद्ध्यात्मनिर्वाहिणा
युद्धे वैश्रवणालयेऽचलशिलावेग(प्रतीसालिना?*) ।
भीमेनाद्य हिडिम्बराक्षसपतिप्राणप्रतिग्राहिणा
यद्येवं समवैषि मां छलजितं भो राम ! नाहं जितः ॥ ३४ ॥

**बलदेवः**—भीमसेन इदानीं तव युद्धवञ्चनामुत्पाद्य स्थास्यति ।

**दुर्योधनः**—किं चाहं भीमसेनेन वञ्चितः ।

**बलदेवः**—अथ केन भवानेवंविधः कृतः ।

**‡राजा**—श्रूयतां ,

येनेन्द्रस्य स पारिजातकतरुर्मानेन तुल्यं हृतो
दिव्यं वर्षसहस्रमर्णवजले सुप्तश्च यो लीलया ।
तीव्रां भीमगदां प्रविश्य सहसा निर्व्याजयुद्धप्रिय-
स्तेनाहं जगतः प्रियेण हरिणा मृत्योः प्रतिग्राहितः॥ ३५ ॥

(नेपथ्ये)

(क) उस्सरह अय्या ! उस्सरह ।

**बलदेवः**—(विलोक्य) अये अयमत्रभवान् धृतराष्ट्रो गान्धा-(री?र्या) दुर्जयेनादेशितमार्गोऽन्तःपुरानुबन्धः शोकाभिभूतहृदय

(क) उत्सरतार्याः ! उत्सरत ।

* 'प्रतीसारिणा' इति स्यात् । ‡ राजा दुर्योधनः ।

इत एवाभिवर्तते । य एषः,

वीर्याकरः सुतशतप्रविभक्तचक्षु-
दर्पोद्यतः कनकयूपविलम्बबाहुः ।
सृष्टो ध्रुवं त्रिदिवरक्षणजातशङ्कै-
र्देवैररातितिमिराञ्जलिताडिताक्षः(?) ॥ ३६ ॥

(ततः प्रविशति धृतराष्ट्रो गान्धारी देव्यौ दुर्जयश्च )

धृतराष्ट्रः — पुत्र ! क्वासि ।

गान्धारी — (क) पुत्तअ ! कहिं सि ।

देव्यौ — (ख) महाराअ ! कहिं सि ।

धृतराष्ट्रः — भोः ! कष्टम् ।

वञ्चनानिहतं श्रुत्वा सुतमद्याहवे मम ।
मुखमन्तर्गतास्राक्षमन्धमन्धतरं कृतम् ॥ ३७ ॥

गान्धारि ! किं धरसे ।

गान्धारी — (ग) जीवाविद ह्मि मन्दभाआ ।

देव्यौ — (घ) महाराअ ! महाराअ ! ।

---

(क) पुत्रक ! क्वासि ।

(ख) महाराज ! कुत्रासि ।

(ग) जीवितास्मि मन्दभागा

(घ) महाराज ! महाराज ! ।

**राजा**— भोः! कष्टम्। यन्ममापि स्त्रियो रुदन्ति।

पूर्वं न जानामि गदाभिघात-
रुजामिदानीं तु समर्थयामि।
यन्मे प्रकाशीकृतमूर्धजानि
रणं प्रविष्टान्यवरोधनानि ॥ ३८ ॥

**धृतराष्ट्रः**— गान्धारि! किं दृश्यते दुर्योधननामधेयः कुलमानी।

**गान्धारी**— (क) महाराअ! ण दिस्सदि।

**धृतराष्ट्रः**— कथं न दृश्यते। अद्यास्मि, योऽहमन्वेष्टव्ये काले पुत्रं न पश्यामि। कृतान्तहतक!

रिपुसमरविमर्दं मानवीर्यप्रदीप्तं
सुतशतमतिधीरं वीरमुत्पाद्य मा(नं?नीं)।
धरणितलविकीर्णं किं स योग्यो न भोक्तुं
सकृदपि धृतराष्ट्रः पुत्रदत्तं निवापम् ॥ ३९ ॥

**गान्धारी**— (ख) जाद! सुयोधण! देहि मे पडिवअणं। पुत्तसदविणासदुक्खिदं महाराअं च मन्दभाअं ¶।

---

(क) महाराज! न दृश्यते।

(ख) जात! सुयोधन! देहि मे प्रतिवचनम्। पुत्रशतविनाशदुःखितं महाराजं च मन्दभागम्।

---

¶ 'संभावेहि' इति शेषः।

**बलदेवः**—अये इयमत्रभवती गान्धारी ।

या पुत्रपौत्रवदनेष्वकुतूहलाक्षी
†दुर्योधनास्तमितशोकनिपीतधैर्या ।
अस्रैरजस्रमधुना पतिधर्मचिह्न-
मार्द्रीकृतं *नयनबन्धमिदं दधाति ॥ ४० ॥

**धृतराष्ट्रः**—पुत्र! दुर्योधन! अष्टादशाक्षौहिणीमहाराज! क्वासि ।

**राजा**—अद्यास्मि महाराजः ।

**धृतराष्ट्रः**—पुत्रशतज्येष्ठ! देहि मे प्रतिवचनम् ।

**दुर्योधनः**—(अन्य)न्ददामि खलु वृत्तान्तम् । अनेन वृत्तान्तेन व्रीलितोऽस्मि ।

**धृतराष्ट्रः**—एहि पुत्र! अभिवादयस्व माम् ।

**राजा**—अयमयमागच्छामि । (उत्थानं रूपयित्वा पतति) हा धिक् । अयं मे द्वितीयः प्रहारः । कष्टं भोः!

हृतं मे भीमसेनेन गदापातकचग्रहे ।
सममूरुद्वयेनाद्य गुरोः पादाभिवन्दनम् ॥ ४१ ॥

---

† दुर्योधनस्यास्तमितेनास्तमयेन य. शोकः, तेन निपीतधैर्या । * नयनं बध्नातीति नयनबन्धं नयनाच्छादनवस्त्रमित्यर्थः ।

**गान्धारी**—(क) एत्थ जादा ! ।

**देव्यौ**—(ख) अय्ये ! इमा ह्म ।

**गान्धारी**—(ग) अण्णेसह भत्तारं ।

**देव्यौ**—(घ) गच्छामि मन्दभाआ ।

**धृतराष्ट्रः**—क एष भोः ! मम वस्त्रान्तमाकर्षन् मार्गमादेशयति ।

**दुर्जयः**—(ङ) ताद ! अहं दुज्जयो ।

**धृतराष्ट्रः**—पौत्र ! दुर्जय ! पितरमन्विच्छ ।

**दुर्जयः**—(च) परिस्सन्तो खु अहं ।

**धृतराष्ट्रः**—गच्छ, पितुरङ्के विश्रमयिष्यसि ।

**दुर्जयः**—(छ) ताद ! अहं गच्छामि । (उपसृत्य) ताद ! कहिं सि ।

---

(क) अत्र जाते ! ।

(ख) आर्ये ! इमे स्वः ।

(ग) अन्वेषेथा भर्तारम् ।

(घ) गच्छामि मन्दभागा(?) ।

(ङ) तात ! अहं दुर्जयः ।

(च) परिश्रान्तः खल्वहम् ।

(छ) तात ! अहं गच्छामि । तात ! कुत्रासि ।

**राजा** — अये अयमप्यागतः । सर्वावस्थायां हृदयसन्निहितः पुत्रस्नेहो मां दहति । कुतः,

> दुःखानामनभिज्ञेयो ममाङ्कशयनोचितः ।
> निर्जितं दुर्जयो दृष्ट्वा किन्नु मामभिधास्यति ॥ ४२ ॥

**दुर्जयः** — (क) अअं महाराओ भूमीए उवविट्ठो ।

**राजा** — पुत्र ! किमर्थमागतः ।

**दुर्जयः** — (ख) तुवं चिरायसि त्ति ।

**राजा** — अहो अस्यामवस्थायां पुत्रस्नेहो हृदयं दहति ।

**दुर्जयः** — (ग) अहं पि खु दे अङ्के उवविसामि । (अङ्कमारोहति)

**राजा** — (निवार्य) दुर्जय ! दुर्जय ! भोः ! कष्टम् ।

> हृदयप्रीतिजननो यो मे नेत्रोत्सवः स्वयम् ।
> सोऽयं कालविपर्यासाच्चन्द्रो वह्नित्वमागतः ॥ ४३ ॥

**दुर्जयः** — (घ) अङ्के उववेसं किंणिमित्तं तुवं वारेसि ।

---

(क) अयं महाराजो भूम्यामुपविष्टः ।

(ख) त्व चिरायसीति ।

(ग) अहमपि खलु ते अङ्के उपविशामि ।

(घ) अङ्के उपवेश किन्निमित्तं त्वं वारयासि ।

**राजा** —

त्यक्त्वा परिचितं पुत्र! यत्रतत्र त्वयास्यताम् ।
अद्यप्रभृति नास्तीदं पूर्वभुक्तं तवासनम् ॥ ४४ ॥

**दुर्जयः** — (क) कहिंणुखु महाराओ गमिस्सदि ।

**राजा** — भ्रातृशतमनुगच्छामि ।

**दुर्जयः** — (ख) मं पि तहिं णेहि ।

**राजा** — गच्छ पुत्र! वृकोदरं ब्रूहि ।

**दुर्जयः** — (ग) एहि महाराअ! अण्णेसीअसि ।

**राजा** — पुत्र! केन ।

**दुर्जयः** — (घ) अय्याए, अय्येण, सव्वेण अन्तउरेण अ ।

**राजा** — गच्छ पुत्र! नाहमागन्तुं समर्थः ।

**दुर्जयः** — (ङ) अहं तुवं णइस्सं ।

**राजा** — बालस्त्वमासि पुत्र! ।

**दुर्जयः** — (परिक्रम्य) (च) अय्या! अअं महाराओ ।

---

(क) कुत्रनुखलु महाराजो गमिष्यति ।
(ख) मामपि तत्र नय ।
(ग) एहि महाराज! अन्विष्यसे ।
(घ) आर्ययार्येण सर्वेणान्तःपुरेण च ।
(ङ) अहं त्वां नेष्यामि ।
(च) आर्याः! अयं महाराजः ।

देव्यौ ---(क) हा हा महाराओ ।

धृतराष्ट्रः --- क्वासौ महाराजः ।

गान्धारी ---(ख) कहिं मे पुत्तओ ।

दुर्जयः --- (ग) अअं महाराओ भूमीए उवविट्ठो ।

धृतराष्ट्रः --- हन्त भोः! किमयं महाराजः ।

यः काञ्चनस्तम्भसमप्रमाणो
लोके किलैको वसुधाधिपेन्द्रः ।
कृतः स मे भूमिगतस्तपस्वी
द्वारेन्द्रकीलार्धसमप्रमाणः ॥ ४५ ॥

गान्धारी ---(घ) जाद! सुयोधण! परिस्सन्तो सि ।

राजा --- भवत्याः खल्वहं पुत्रः ।

धृतराष्ट्रः --- केयं भोः! ।

गान्धारी ---(ङ) महाराअ! अहमभीदपुत्तप्पआइणी ।

---

(क) हा हा महाराजः ।
(ख) कुत्र मे पुत्रकः ।
(ग) अयं महाराजो भूम्यामुपविष्टः ।
(घ) जात! सुयोधन! परिश्रान्तोऽसि ।
(ङ) महाराज! अहमभीतपुत्रप्रदायिनी ।

**राजा** — अद्योत्पन्नमिवात्मानमवगच्छामि । भोस्तात! किमिदानीं वैक्लब्येन ।

**धृतराष्ट्रः** — पुत्र! कथं विक्लबो भविष्यामि ।

यस्य वीर्यबलोत्सिक्तं संयुगाध्वरदीक्षितम् ।
पूर्वं भ्रातृशतं नष्टं त्वय्येकस्मिन् हते हतम् ॥ ४६ ॥

(पतति)

**राजा** — हा धिक् । पतितोऽत्रभवान् । तात! समाश्वासयात्रभवतीम् ।

**धृतराष्ट्रः** — पुत्र! किमिति समाश्वासयामि ।

**राजा** — अपराङ्मुखो युधि हत इति । भोस्तात! शोकनिग्रहेण क्रियतां ममानुग्रहः ।

त्वत्पादमात्रप्रणताग्रमौलि-
र्ज्वलन्तमप्यग्निम्† अचिन्तयित्वा ।
येनैव मानेन समं प्रसूत-
स्तेनैव मानेन दिवं प्रयामि ॥ ४७ ॥

**धृतराष्ट्रः** —

वृद्धस्य मे जीवितनिस्स्पृहस्य
निसर्गसम्मीलितलोचनस्य ।

---

† नित्याराधनविषयं गृह्यामिमित्यर्थः ।

धृतिं निगृह्यात्मनि सम्प्रवृत्त-
स्तीव्रः समाक्रामति पुत्रशोकः ॥ ४८ ॥

बलदेवः — भोः! कष्टम् ।

दुर्योधननिराशस्य नित्यास्तमितचक्षुषः ।
न शक्नोम्यत्रभवतः कर्तुमात्मनिवेदनाम् ॥ ४९ ॥

राजा — विज्ञापयाम्यत्रभवतीम् ।

गान्धारी — (क) भणाहि जाद! ।

राजा —

नमस्कृत्य वदामि त्वां यदि पुण्यं मया कृतम् ।
अन्यस्यामपि जात्यां मे त्वमेव जननी भव ॥ ५० ॥

गान्धारी — (ख) मम मणोरहो खु तुए भणिदो ।

राजा — मालवि! त्वमपि शृणु ।

भिन्ना मे भ्रुकुटी गदानिपतितै(र्या ? र्व्या)युद्धकालोत्थितै-
र्वक्षस्युत्पतितैः प्रहाररुधिरैर्हारावकाशो हृतः ।
पश्येमौ व्रणकाञ्चनाङ्गदधरौ पर्याप्तशोभौ भुजौ
भर्ता ते नपराङ्मुखो युधि हतः किं क्षत्रिये! रोदिषि ॥ ५१ ॥

देवी — (ग) बाळा एसा सहधम्मचारिणी रोदामि ।

---

(क) भण जात! ।

(ख) मम मनोरथः खलु त्वया भणितः ।

(ग) बाला एषा सहधर्मचारिणी रोदिमि ।

**राजा** — पौरवि ! त्वमपि शृणु ।

वेदोक्तैर्विविधैर्मखैरभिमतैरिष्टं धृता बान्धवाः
शत्रूणामुपरि स्थितं प्रियश(तं न ? तान्न)व्यंसिताः संश्रिताः ।
युद्धेऽष्टादशवाहिनीनृपतयः सन्तापिता निग्रहे
मानं मानिनि ! वीक्ष्य मे† नहि रुदन्त्येवंविधानां स्त्रियः॥५२॥

**पौरवी** — (क) एक्ककिदप्पवेसणिच्चआ ण रोदामि ।

**राजा** — दुर्जय ! त्वमपि शृणु ।

**धृतराष्ट्रः** — गान्धारि ! किन्नुखलु वक्ष्यति ।

**गान्धारी** — (ख) अहं पि तं जव्व चिन्तेमि ।

**राजा** — अहमिव पाण्डवाः शुश्रूषयितव्याः*, तत्रभवत्याश्चाम्बायाः कुन्त्या निदेशो वर्तयितव्यः । अभिमन्योर्जननी द्रौपदी चोभे मातृवत् पूजयितव्ये । पश्य पुत्र !

श्लाघ्यश्रीरभिमानदीप्तहृदयो दुर्योधनो मे पिता
तुल्येनाभिमुखं रणे हत इति त्वं शोकमेवं त्यज ।

---

(क) एककृतप्रवेशनिश्चया न रोदिमि ।

(ख) अहमपि तदेव चिन्तयामि ।

---

† एतदुत्तरं 'न त्वया शोचितु युक्तम्' इति गम्यमर्थमादाय वाक्य पूर्णीयम् । ततः सामान्यन्यायोपन्यासो नहीत्यादिना । * शुश्रूपितव्या इत्यर्थः ।

स्पृष्ट्वा चैव युधिष्ठिरस्य विपुलं क्षौमापसव्यं भुजं
देयं पाण्डुसुतैस्त्वया मम समं नामावसाने जलम ॥५३॥

बलदेवः — अहो वैरं पश्चात्तापः संवृत्तः । अये शब्द इव

सन्नाहदुन्दुभिनिनादवियोगमूके
विक्षिप्तबाणकवचव्यजनातपत्रे ।
कस्यैष कार्मुकरवो हतसूतयोधे†
विभ्रान्तवायसगणं गगनं करोति ॥ ५४ ॥

(नेपथ्ये)

दुर्योधनेनाततकार्मुकेण
यो युद्धयज्ञः सहितः प्रविष्टः ।
तमेव भूयः प्रविशाम्यशून्य-
मध्वर्युणा वृत्तमिवाश्वमेधम् ॥ ५५ ॥

बलदेवः — अये अयं गुरुपुत्रोऽश्वत्थामेत एवाभिवर्तते । य

एषः,

स्फुटितकमलपत्रस्पष्टविस्तीर्णदृष्टी
रुचिरकनकयूपव्यायतालम्बबाहुः ।
सरभसमयमुग्रं कार्मुकं कर्षमाणः*
सदहन इव मेरुः शृङ्गलग्नेन्द्रचापः ॥ ५६ ॥

---

† देशे इति वा काले इति वा विशेष्य गम्यम् । * चानशान्तामिदम् ।

(ततः प्रविशत्यश्वत्थामा)

**अश्वत्थामा**— (पूर्वोक्तमेव पठित्वा) भोः ! समरसंरम्भोभयबलजलधिसङ्गमसमयसमुत्थितशस्त्रनक्रकृत्तविग्रहाः स्तोकावशेषाः श्वासानुबद्धमन्दप्राणाः समरश्लाघिनो राजानः ! शृण्वन्तु शृण्वन्तु भवन्तः ।

> छलबलदलितोरुः कौरवेन्द्रो न चाहं
> शिथिलविफलशस्त्रः सूतपुत्रश्च नाहम् ।
> इह तु विजयभूमौ द्रष्टुमद्योद्यतास्त्रः
> सरभसमहमेको द्रोणपुत्रः स्थितोऽस्मि ॥ ५७ ॥

किमनया समाप्यप्रतिलाभविजयश्लाघया समरश्रिया । (परिक्रम्य) मा तावत् । मयि गुरुनिवपनव्यग्रे वञ्चितः कुरुतिलकभूतः कुरुराजः । क एतच्छ्रद्धास्यति । कुतः,

> उद्यत्प्राञ्जलयो रथद्विपगताश्वापद्धितीयैः करै-
> र्येस्यैकादशवाहिनीनृपतयस्तिष्ठन्ति वाक्योन्मुखाः ।
> भीष्मो रामशरावलीढकवचस्तातश्च योद्धा रणे
> व्यक्तं निर्जित एव सोऽप्यतिरथः कालेन दुर्योधनः ॥५८॥

तत् क्वनुखलु गतो गान्धारीपुत्रः। (परिक्रम्यावलोक्य) अये अयमभिहतगजतुरगनररथप्राकारमध्यगतः समरपयोधिपारगः कुरुराजः । य एषः,

‡मौलीनिपातचलकेशमयूखजालै-
गात्रैर्गदानिपतनक्षतशोणितार्द्रैः ।
यात्यस्तमस्तकशिलातलसन्निविष्टः
सन्ध्यावगाढ इव पश्चिमकालसूर्यः ॥ ५९ ॥

(उपसृत्य) भोः कुरुराज ! किमिदम् ।

**राजा** — गुरुपुत्र ! फलमपरितोषस्य ।

**अश्वत्थामा** — भोः कुरुराज ! सत्कारमूलमावर्जयिष्यामि

**राजा** — किं भवान् करिष्यति ।

**अश्वत्थामा** — श्रूयतां,

युद्धोद्यतं गरुडपृष्ठनिविष्टदेहं
*(वष्टाष्ट?)भीमभुजमुद्यतशार्ङ्गचक्रम् ।
कृष्णं सपाण्डुतनयं युधि शस्त्रजालैः
सङ्कीर्णलेख्यमिव चित्रपटं क्षिपामि ॥ ६० ॥

**राजा** — मा मा भवानेवम् ।

गतं धात्र्युत्सङ्गे सकलमभिषिक्तं नृपकुलं
गतः कर्णः स्वर्गं निपतिततनुः शान्तनुसुतः ।

---

‡ 'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्' इति मेदिनी । ईकारस्तु तत्र 'कृदिकारादक्तिन.' इति ङीपि । * 'वष्टाष्ट' इत्यस्य स्थाने 'अष्टार्ध' इति पाठ्यं भाति ।

शतं भ्रातॄणां मे हतमभिमुखं संयुगमुखे
वयं चैवम्भूता गुरुसुत! धनुर्मुञ्चतु भवान् ॥ ६१ ॥

**अश्वत्थामा** — भोः कुरुराज!

संयुगे पाण्डुपुत्रेण गदापातकचग्रहे ।
सममूरुद्वयेनाद्य दर्पोऽपि भवतो हृतः ॥ ६२ ॥

**राजा** — मा मैवम् । मानशरीरा राजानः । मानार्थमेव मया निग्रहो गृहीतः । पश्य गुरुपुत्र!

यत् कृष्टा करनिग्रहाञ्चितकचा द्यूते तदा द्रौपदी
यद् बालोऽपि हतस्तदा रणमुखे पुत्रोऽभिमन्युः पुनः ।
अक्षव्याजजिता वनं वनमृगैर्यत् पाण्डवाः संश्रिता
नन्वल्पं मयि तैः कृतं विमृश भो! दर्पाहृतं¶ दीक्षितैः ॥ ६३ ॥

**अश्वत्थामा** — सर्वथा कृतप्रतिज्ञोऽस्मि ।

भवता चात्मना चैव वीरलोकैः शपाम्यहम् ।
निशासमरमुत्पाद्य रणे धक्ष्यामि पाण्डवान् ॥ ६४ ॥

**बलदेवः** — एतद् भविष्यत्युदाहृतं गुरुपुत्रेण ।

**अश्वत्थामा** — हलायुधोऽत्रभवान् ।

**धृतराष्ट्रः** — हन्त साक्षिमती खलु वञ्चना ।

**अश्वत्थामा** — दुर्जय! इतस्तावत् ।

---

¶ दर्पाहृत दर्पाहरणम् ।

पितृविक्रमदायाद्ये राज्ये भुजबलार्जिते ।
विनाभिषेकं राजा त्वं विप्रोक्तैर्वचनैर्भव ॥ ६५ ॥

राजा — हन्त कृतं मे हृदयानुज्ञातम् । परित्यजन्ति मे प्राणाः । इमेऽत्रभवन्तः शन्तनुप्रभृतयो मे पितृपितामहाः । एतत् कर्णमग्रतः कृत्वा समुत्थितं भ्रातृशतम् । अयमप्यैरावतशिरोविषक्तः काकपक्षधरो महेन्द्रकरतलमवलम्ब्य क्रुद्धोऽभिभाषते मामभिमन्युः । (इमा) उर्वश्यादयोऽप्सरसो मामभिगताः । इमे मूर्तिमन्तो महार्णवाः । एता गङ्गाप्रभृतयो महानद्यः । एष सहस्रहंसप्रयुक्तो मां नेतुं वीरवाही विमानः कालेन प्रेषितः । अयमयमागच्छामि । (स्वर्गं गतः)

(यवनिकास्तरणं करोति)

(धृतराष्ट्रः) —

याम्येष सज्जनधनानि तपोवनानि
पुत्रप्रणाशविफलं हि धिगस्तु राज्यम् ।

अश्वत्थामा —

यातोऽद्य सौप्तिकवधोद्यतबाणपाणिः
*गां पातु नो नरपतिः शमितारिपक्षः ॥ ६६ ॥

(निष्क्रान्ताः सर्वे)

ऊरुभङ्गमवसितम् ।

---

शुभं भूयात् ।

---

* इतः प्राक् '(भरतवाक्यम्)' इत्यपेक्षितम् ।

*TRIVANDRUM SANSKRIT SERIES.*

NO. XVII.

THE

# PANCHARÂTRA

OF

# BHÂSA

EDITED WITH NOTES

BY

**T. GAṆAPATI SÂSTRÎ,**

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM

Bhasa's Works.—No. 3.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE

---

**TRIVANDRUM.**

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1912.

---

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १७.

# पञ्चरात्रं

महाकविश्रीभासप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।

भासनाटकचक्रे तृतीयम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः १०८७, क्रैस्ताब्दाः १९१२.

# पात्राणि ।

---

| | | |
|---|---|---|
| दुर्योधनः | = | हास्तिनेश्वरः । |
| भीष्मः | = | दुर्योधनादीनां पितामहः । |
| द्रोणः | = | दुर्योधनादीनां धनुराचार्यः । |
| कर्णः | = | अङ्गेश्वरो दुर्योधनस्य सखा । |
| शकुनिः | = | दुर्योधनस्य मातुलः । |
| भटः | = | दुर्योधनस्य भृत्यः । |
| वृद्धगोपालकः | = | गोकुलाध्यक्षः । |
| गोमित्रकः | = | कश्चिद् गोपालः । |
| राजा | = | मत्स्यदेशाधिपतिर्विराटनामा । |
| भगवान् | = | ब्राह्मणव्यञ्जनो धर्मपुत्रः । |
| भीमसेनः | = | धर्मपुत्रस्यानुजः । |
| अर्जुनः | = | तथा । |
| बृहन्नला | = | अर्जुनः । |
| अभिमन्युः | = | अर्जुनस्य पुत्रः । |
| उत्तरः | = | विराटस्य पुत्रः । |
| सूतः | = | विराटस्य अभिमन्योश्च सारथिः । |
| काञ्चुकीयः | = | विराटस्य परिजनः । |
| दूतः | = | तथा । |
| भटः | = | विराटस्य भृत्यः । |

---

# कथावस्तुसंक्षेपः ।

---

दुर्योधनो यज्ञावभृथान्ते ब्राह्मणसन्तर्पणावसरे धनुराचार्यं द्रोणं तस्याभीष्टदक्षिणां पृष्टवान् । पाण्डवेभ्योऽर्धराज्यदानमेव मम सुदक्षिणेति तेन निवेदिते शकुनिना सह सम्मन्त्र्य 'यदि पञ्चरात्रेण पाण्डवानामज्ञातवासिना प्रवृत्तिरुपनीयते, तर्हि तेभ्योऽर्धराज्य दद्याम्' इति स प्रतिजज्ञे । कीचकशतविशसननिवेदकेन विराटदूतवचनेन पाण्डवानां विराटनगरेऽज्ञातं वास निश्चिन्वन् भीष्मस्तदाचार्यमभ्युपगमय्य स्वस्य विराटेनाप्रकाशं वैरमपदिशन् तदीयगोग्रहणाय दुर्योधनमुद्योजयामास । तेन च ससैन्येन विराटनगरमुपरुध्य गोग्रहणे क्रियमाणे बृहन्नलाव्यञ्जनोऽर्जुन उत्तराधिष्ठितं रथं वाहयन् श्मशानात् परिगृहीतनिजायुधो दुर्योधनादीन् सर्वान् विद्राव्य निववृते । ततः सूदरूपो भीमः सुतपरिष्वङ्गाभिलाषी हस्तेनैव रथादभिमन्युमवतार्य विराटसमीपमर्जुनसाहित आनिन्ये । ततोऽभिमन्युस्तत्त्वापरिज्ञानेन भीमार्जुनौ शत्रुरिति विराटं चावजानन् ब्राह्मणरूपं युधिष्ठिरं परं प्रणतवान् । अथ सर्वमिदं शत्रुनिराकरणमुत्तरस्यैव कर्म मन्यमानाय विराटायोत्तरः समागत्य बृहन्नलावेषोऽयमर्जुन इति, अनेनैव दुर्योधनादयः सर्वे पराजिता इति च न्यवेदयत् । ततोऽर्जुने युधिष्ठिरादीनेव सर्वान् वेषप्रच्छन्नान् प्रकाश्य विजयशुल्कार्थं विराटेन दत्तामुत्तरां स्नुषार्थं परिगृह्णति धर्मराजविराटौ प्रमुदितावभिमन्युविवाहनिवेदनाय भीष्मादिसकाशमुत्तरं दूतं प्राहिणुताम् । भीष्मादिष्वप्यभिमन्युहरणं प्रति किञ्चिद् विमनाय्य शरेष्वर्जुननामावलोक्य सर्वमिदमसदवमाननमर्जुनस्य कर्म, अभिमन्युश्च भीमेनैवापहृत इति निरूपयत्सु शकुनौ च तदप्रतिपद्यमाने सहसागत्योत्तरः प्रणतिपूर्वकं युधिष्ठिरसन्देशं यथावदाख्यातवान् । अथ दुर्योधनः पाण्डवेभ्योऽर्धराज्यदानमभ्युपजगाम, तेन च सर्वे प्रसन्ना बभूवुः ॥

---

